# राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक-पुरातत्त्वाचार्य, जिनविजय मुनि
[ सम्मान्य संचालक, राजस्थान पुरातत्त्वान्वेषण मन्दिर, जोधपुर ]

ग्रन्थाङ्क ३०

श्रीमत् कविकलानिधि देवर्षिश्रीकृष्णभट्टविरचित

# पद्यमुक्तावली

प्र का श क
राजस्थानराज्यसंस्थापित
राजस्थान पुरातत्त्वान्वेषण मन्दिर
Rajasthan Oriental Research Institute, Jodhpur
जो ध पु र ( राजस्थान )

35.00

# राजस्थान पुरातन ग्रन्थमाला

प्रधान सम्पादक-पुरातत्त्वाचार्य, जिनविजयमुनि

[ सम्मान्य संचालक, राजस्थानपुरातत्त्वान्वेषणमन्दिर, जयपुर ]

ग्रन्थाङ्क ३०


श्रीमत् कविकलानिधि देवर्षिश्रीकृष्णभट्टविरचित–

# पद्यमुक्तावली


प्र का श क

राजस्थानराज्यसंस्थापित

राजस्थानपुरातत्त्वान्वेषणमन्दिर

Rajasthan Oriental Research Institute, Jodhpur

जो ध पु र ( राजस्थान )

# राजस्थान पुरातन ग्रन्थमाला

राजस्थानराज्यद्वारा प्रकाशित

सामान्यतः अखिल भारतीय तथा विशेषतः राजस्थानदेशीय पुरातनकालीन
संस्कृत, प्राकृत, अपभ्रंश, राजस्थानी, हिन्दी आदिभाषानिबद्ध
विविध वाङ्मयप्रकाशिनी विशिष्ट ग्रन्थावलि

---

प्रधान सम्पादक

पुरातत्त्वाचार्य, जिनविजय मुनि

[ ऑनरेरि मेंबर ऑफ जर्मन ओरिएन्टल सोसाइटी, जर्मनी ]

सम्मान्य सदस्य

भाण्डारकर प्राच्यविद्यासंशोधनमन्दिर, पूना; गुजरातसाहित्य-सभा, अहमदाबाद;
विश्वेश्वरानन्द वैदिकशोधनप्रतिष्ठान, होशियारपुर; निवृत्त सम्मान्य नियामक–
( ऑनरेरि डायरेक्टर )—भारतीय विद्याभवन, बम्बई

---

ग्रन्थाङ्क ३०

श्रीमत् कविकलानिधि देवर्षि श्रीकृष्णभट्टविरचित

# पद्यमुक्तावली

---

प्रकाशक

राजस्थान राज्याज्ञानुसार

संचालक, राजस्थानपुरातत्त्वान्वेषण मन्दिर

जोधपुर ( राजस्थान )

श्रीमत् कविकलानिधि देवर्षि श्रीकृष्णभट्ट विरचित

# पद्यमुक्तावली


सम्पादक

कविशिरोमणि देवर्षि भट्ट श्रीमथुरानाथजी शास्त्री



प्रकाशनकर्त्ता

राजस्थानराज्याज्ञानुसार

संचालक, राजस्थानपुरातत्त्वान्वेषणमन्दिर

जोधपुर ( राजस्थान )

---

35.00

विक्रमाब्द २०१५ ] भारतराष्ट्रीय शकाब्द १८८० [ खिस्ताब्द १९५९

प्रथमावृत्ति १००० ~~मूल्य ५.००~~

मुद्रक—श्री बालचन्द्र यन्त्रालय, दुर्गापुरा, जयपुर।

# राजस्थानपुरातनग्रन्थमाला के कुछ ग्रन्थ

## प्रकाशित ग्रन्थ

**संस्कृतभाषाग्रन्थ**—१. प्रमाणमञ्जरी--तार्किकचूड़ामणि सर्वदेवाचार्य, मूल्य ६'०० । २. यन्त्रराजरचना–महाराजा सवाई जयसिंह मूल्य १'७५ । ३. महर्षिकुलवैभवम्–स्व० श्रीमधुसूदन ओझा मूल्य १०'७५ । ४. तर्कसंग्रह–पं० क्षमाकल्याण मूल्य ३'०० । ५. कारकसम्बन्धोद्योत–पं० रभसनन्दि मूल्य १'७५ । ६. वृत्तिदीपिका पं० मौनिकृष्ण मूल्य २'०० । ७. शब्दरत्नप्रदीप मूल्य २'०० । ८. कृष्णगीति–कवि सोमनाथ मूल्य १'७५ । ९ शृङ्गारहारावलि–हर्षकवि मूल्य २'७५ । १०. चक्रपाणिविजयमहाकाव्यं–पं० लक्ष्मीधरभट्ट मूल्य ३'५० । ११. राजविनोद–कवि उदयराज मूल्य २'२५ । १२. नृत्तसंग्रह मूल्य १'७५ । १३. नृत्यरत्नकोश, प्रथम भाग–महाराणा कुंभा मूल्य ३'७५ । १४. उक्तिरत्नाकर–पं० साधुसुन्दर गणि मूल्य ४.७५ । १५. दुर्गापुष्पांजलि–पं० दुर्गाप्रसाद द्विवेदी मूल्य ४'२५ । १६. कर्णकुतूहलं तथा कृष्णलीलामृतं–भोलानाथ मूल्य १'५० । १७. ईश्वरविलास महाकाव्य, श्रीकृष्ण भट्ट, मूल्य ११.५० । १८' पद्यमुक्तावली–कवि कलानिधि श्रीकृष्णभट्ट मूल्य ४.०० ।

**राजस्थानी और हिन्दी भाषा ग्रन्थ**–१. कान्हडदे प्रबन्ध-कवि पद्मनाभ मूल्य १२'२५ । २. क्यामखांरासा–कवि जान मूल्य ४'७५ । ३. लावारासा–गोपालदान मूल्य ३.७५ । ४. वांकीदासरी ख्यात–महाकवि वांकीदास मूल्य ५'५० । ५. राजस्थानी साहित्यसंग्रह भाग १, मूल्य २'२५ । ६. जुगल–विलास–कवि पीथल मूल्य १.७५ । ७. कवीन्द्रकल्पलता–कवीन्द्राचार्य मूल्य । २'०० ।

## प्रेसों में छप रहे ग्रन्थ

**संस्कृत भाषा ग्रन्थ**—१. त्रिपुराभारतीलघुस्तव–लघुपंडित । २ शकुनप्रदीप–लावण्यशर्मा । ३. करुणामृतप्रपा–ठक्कुर सोमेश्वर । ४. बालशिक्षा व्याकरण–ठक्कुर संग्राम-सिंह । ५. पदार्थरत्नमञ्जूषा, पं० कृष्णमिश्र । ६. काव्यप्रकाशसंकेत–भट्ट सोमेश्वर । ७. वसन्तविलास फागु । ८. नृत्यरत्नकोश भाग २ । ९. नन्दोपाख्यान । १०. रत्नकोश । ११. चान्द्रव्याकरण । १२. स्वयंभूछंद–स्वयंभू कवि । १३. प्राकृतानंद–कवि रघुनाथ । १४. मुग्धावबोध आदि औक्तिक संग्रह । १५. कविकौस्तुभ-पं० रघुनाथ मनोहर । १६. दशकण्ठवधम्-पं० दुर्गाप्रसाद । १७. रसदीर्घिका–विद्याराम भट्ट ।

**राजस्थानी और हिन्दी भाषाग्रन्थ**—१. मुंहता नेणसीरी ख्यात–मुंहता नेणसी । २. ... गोराबादल पदमिणी चऊपई–कवि हेमरतन । ५. चन्द्रवंशावली–कवि मोतीराम । ६. राजस्थानी दूहा संग्रह । ७. वीरवांण–ढाढी बादर ।

इन ग्रन्थोंके अतिरिक्त अनेकानेक संस्कृत, प्राकृत, अपभ्रंश, प्राचीन राजस्थानी और हिन्दी भाषा में रचे गये ग्रन्थोंका संशोधन और सम्पादन किया जा रहा है ।

———

# सञ्चालकीय वक्तव्य

राजस्थान के राजाओं द्वारा समय-समय पर देश के प्रमुख विद्वानों, कवियों और धर्माचार्यों को प्रश्रय एवं प्रोत्साहन मिलता रहा है। राजस्थान के विद्याप्रेमी नरेशों में कई उच्चकोटि के विद्वान और कवि भी हो गये हैं जिनके द्वारा रचित ग्रन्थरत्नों का विद्वज्जगत में समुचित आदर है। विद्याप्रेमी नरेश देश के प्रमुख पंडितों और कवियों को अपने निकट रखने के लिये भी सदा उत्सुक रहते थे। इसके लिये वे समय-समय पर प्रमुख विद्वानों को विशेषरूप से आमन्त्रित किया करते थे और उनके दरबार में विद्याचर्चा प्रायः हुआ करती थी। विद्वानों को समुचित मान सम्मान, धन और धरती भेंट करते हुए अपने राज्य में बसाने के लिये तो ऐसे नरेश सदा ही उत्सुक रहा करते थे। यही कारण है कि आज राजस्थान में उच्चकोटि का, प्राचीन साहित्य प्रचुर परिमाण में उपलब्ध है और कई पंडित--परिवार भी राजस्थान में बसे हुए हैं।

कविकलानिधि देवर्षि श्रीकृष्णभट्ट भी अपने समय के प्रमुख कवि और विद्वान हो गये हैं। राजस्थान के तत्कालीन कर्ता राज्यों में श्रीकृष्णभट्ट का विशेष सम्मान था। श्रीकृष्णभट्ट द्वारा प्रणीत और राजस्थानपुरातनग्रन्थमाला में प्रकाशित "ईश्वरविलास" से कवि की ऐतिहासिक काव्यप्रणयन-प्रतिभाः का समुचित परिचय उपलब्ध होता है। मुक्तक काव्यकृति "पद्यमुक्तावली" भी श्रीकृष्णभट्ट की ही कृति है, जिसका प्रकाशन राजस्थानपुरातनग्रन्थमाला में किया जा रहा है। प्रस्तुत कृति से कवि की बहुमुखी प्रतिभा का परिचय मिलता है। कवि के वंशज देवर्षि श्री मथुरानाथ जी भट्ट, कवि शिरोमणि ने इसके सटीक सम्पादन में विशेष श्रम किया है जिसके लिये वे हमारे साधुवाद के पात्र हैं।

राजस्थान में रचित ऐसे ग्रन्थरत्नों को राजस्थान पुरातनग्रन्थमाला में प्रकाशन के लिये हम सदा ही तत्पर रहेंगे। इति।

राजस्थानपुरातत्त्वान्वेषणमंदिर,
रेजीडेंसी रोड, जोधपुर
दिनांक १ जनवरी, १९५९ ई०

मुनि जिनविजय
संमान्य सञ्चालक

———*———

# विषय तालिका–पद्यमुक्तावली

## विषय–तालिका



——**——

# प्रारम्भिकं निवेदनम्

स्फुरद्रुचि- रसोल्लासा विलासाऽऽपूर्णविग्रहा ।
'पद्यमुक्तावली' भाति मञ्जुमुक्तावली यथा ॥१॥

प्रकृतग्रन्थकर्तुः श्रीमतः कविकलानिधिमहाभागस्य विस्तृतः परिचयः प्राप्तो भवेत 'ईश्वरविलास' महाकाव्यात् साहित्यसमीक्षानिपुणैः पाठकमहाभागैरिति जानीमः । यतो हि कविकलानिधिमहोदयस्य प्रथमो ग्रन्थस्तदिदं महाकाव्यं पुरातत्त्वमन्दिरादस्मादेव प्रकाशितमभूत् । ग्रन्थकर्तुर्विषये कामं परिज्ञातेऽपि, प्रकृतग्रन्थस्य विषयोऽवश्यं जिज्ञासितः । ग्रन्थोऽयं राजस्थानीयानां प्रसिद्धप्रसिद्धनरेन्द्राणां समादरभाजनस्य श्रीकविकलानिधिमहोदयस्य 'मुक्तक'पद्यानां संग्रहरूप—इति ग्रन्थस्याऽस्य नाम्नैव सूचितं भवति । पद्यानि चैतानि बाहुल्येन तत्समयप्रसिद्धानामैतिहासिकपुरुषाणामेव सन्ति । अतएव पद्यं पठतां महाभागानां तत्संबन्धिपरिचयाय भवेदुत्कण्ठेति स्वाभाविकं नूनम् । ततश्च—पद्यमुक्तावली सेयं कस्मिन् समये निगुम्फिता, भारते काऽऽसीत्परिस्थितिस्तस्मिन् समये, इति संक्षेपतः संसूचनीयमिव ।

सोयमासीन्मोगलसाम्राज्यस्यान्तिमः समयः । महाराष्ट्रशक्त्या समुत्थाय दुर्बलीकृतमभून्मूलं मोगलशासनस्य । मोगलसाम्राज्यस्य स्तम्भभूताः प्रसिद्ध—प्रसिद्धराजसंस्थानाधिपतयः क्षत्रिया अपि औरङ्गजेबादीनां स्वार्थ—नीत्या विमनायिता इव शनैः शनैरन्यमनस्का बभूवुः । समये समये मोगलशक्तिं मुहुः संभालयन्तोऽपि वीरक्षत्रिया अमी तेषां कौटिल्येन, विशेषतः शैथिल्येन मनसि खिन्नाः समजायन्त । अतएव भाविनीं विपदमभिलक्ष्य स्वस्वराज्यरक्षायां तत्संवर्द्धने च मनोनिवेशमकार्षुः । ज्योतिःशास्त्रादिवाङ्मये कला—शिल्पादिषु च परमं मार्मिकः सवाईजयसिंहमहाराजो ( द्वितीयः ) राजनीतिप्रगल्भेष्वेवंविधवीरराजन्येषु माननीयः प्रमुखश्च बभूव । येन हि राजस्थानस्यास्य श्रीवृद्धिरिव विद्यासमृद्धिरपि सुतरामक्रियत । विश्वप्रसिद्धाया जयपुरराजधान्याः प्रतिष्ठापकस्य तस्यैव श्रीजयसिंहमहाराजस्य परमेण समादरेण समागमज्जयपुरराजधानीं कविकलानिधिः श्रीश्रीकृष्णभट्टमहाभागः ।

अनेन हि राजाधिराजस्य श्रीजयसिंहमहाराजस्य 'अश्वमेधयज्ञा'दिप्रसङ्गे प्रचुरतरः सम्मानस्त्वधिगत एव । किन्तु तदनन्तरं स्वल्पकालस्थायिन्यपि सुसमृद्धे ईश्वरीसिंहमहाराजस्य शासनेऽपि ग्रामादिसंपत्तिः, प्रभूतः समादरश्चाऽप्यधिगतो जयपुरराज्यसंस्थानादस्मात [ तदेतस्य विशदवृत्तं 'ईश्वरविलास' महाकाव्यादधिगतं भवेत्साहित्यमार्मिकैः ] । किन्तु तदिदं शासनं नातिष्ठच्चिरकालं यावत् । राजस्थानीयवीरक्षत्रियाणां परस्परवैमत्येन, गृहकलहेन अकाल एव समाप्यत राज्यशासनमीश्वरीसिंहस्य । ततस्तदनुजः श्रीमाधवसिंहमहाराजः समभूद् जयपुरराजसिंहासनमध्यासीनः । एष हि राजनीतिचक्राण्यनुभूय मानवानां गुणपरीक्षणेऽपि विचक्षणोऽभवत् ।

अतएव निखिलभारतेऽपि सुप्रसरत्प्रभावस्य निजपितुः सम्माननीयस्य कविकलानिधिमहाभागस्याऽयमपि समभून्नितान्तं गुणप्रणयी। कलानिधिमहाभागस्य अशेषशास्त्र-पाण्डित्यम्, वैदिकक्रियविचक्षणत्वम्, तन्त्र-मन्त्रादिकर्मठताम्, असाधारणीं कवितापौढिं चाऽवगत्य दिनप्रतिदिनमनुरक्तो बभूव माधवेन्द्रमहाराजः। अतएव 'पितामह (बाबाजी)' गौरवेण उपच्छन्दयन् उत्तरोत्तरमधिकाऽधिकं सेवते स्म कलानिधिमहोदयम्। महता विश्रम्भेण मानसरहस्यानि प्रकाशयन् संतोषमनुभवति स्म कलानिधिमहोदयस्याऽन्तिके। अतएव 'मुक्तावल्याम्'—"एकदा माधवदमाधवेन स्वहस्तेनाक्षराणि लिखित्वा यदा प्रदर्शितानि तदैवेदं सद्यः पद्यमुत्पादितम्।" इति कविकलानिधिमहाभागस्य स्वहस्तेन पद्योपरि विलिखिता प्राप्यते टिप्पणी—

"श्रीमाधवाम्भोनिधिसंप्रभूतरत्नानि नित्यं ललिताक्षराणि।
श्रीसूर्यवंशोदितदीप्तिमन्ति जगत्समस्तं परिभूषयन्ति ॥१२२॥"

एवंविधैर्विश्रम्भैर्विवशीकृतः कलानिधिमहोदयोऽपि निजायुषः परिशेषे शान्तिविश्रामार्थं वृदावन-तीर्थवासमपि नाशकत्परिशीलयितुम्। यतो हि हार्दिकमनुशोचनं प्राप्यते मुक्तावल्याम्—

'कालिन्दीतटनिकटस्फुटकुटजकुटीनिवाससौख्याय।
व्यरचि मृषाभाषणमपि न तदजनि महत्कष्टम् ॥२६६॥'

मिथ्याकथन-दुरत्ययनृपवरकृतरक्षणव्यथादुष्टः।
हा वृन्दावन भवता संप्रति दूराद्विमुक्तोऽस्मि ॥२६७॥

राज्ञां सदस्सु गमनं कविताकरणं मृषाकलनम्।
वृन्दावनवासार्थं व्यरचि, विधे किं न तदपि संपन्नम् ॥२६८॥'

## पद्यमुक्तावली

कविकलानिधिमहाभागेन ईश्वरविलास-वृत्तमुक्तावली-सुन्दरीस्तवराज-अलङ्कारकलानिधिप्रभृतयो ग्रन्था यथा राजाज्ञया एकैकं विषयमवलम्ब्य प्रकरणबद्धतया पुरा निबद्धास्तथा पद्यमुक्तावली सेयं न तावदेकतमं विषयमाश्रित्य प्रकरणबन्धपुरस्सरं निगुम्फिताऽभूत्। एषा हि समये समये यं कंचिद्वा विषयमाश्रित्य कलानिधिमहाभागस्य प्रतिभास्फूर्तिरभवत्तेषां तेषां विषयाणां यानि यानि पद्यानि सद्यः प्रतिस्फुरितान्यभूवन् तेषां संग्रहः स्वयं कलानिधिमहाभागेन कृतो भवेत्, तत्पुत्रादिभिरन्यैर्वा कृतो भवेत्। किन्तु नानासमये प्रतिस्फुरितानां पद्य-गीत्यादिरचनानां सोयं संग्रहः 'मुक्तक' काव्यकोटिमुक्त इति सुस्पष्टं नूनम्। आसीदेवं समर्थकवीनां पुराऽपि मुक्तकसंग्रहः साहित्यरसिकानां विनोदाय। यथा जगन्नाथपण्डितराजस्य 'भामिनीविलासः'।

'मुक्तक' पद्यानि हि विशेषतो रसनिर्भराणि सन्त्येव रसिकानां हृदयावर्जकाणि भवन्ति। यतो हि प्रबन्धकाव्येषु प्रचलितः कथाप्रवाहः, रसनिर्भरः स स प्रकरणसंदर्भो वा; वाचयतामानन्दाऽऽधायको भवेत्। कस्मिंश्चित्स्थले रसप्रवाहशैथिल्येऽपि कथाप्रवाहो भवेद् वाचकानां मनोयोगाय। किन्तु 'मुक्तक पद्य' यदि रसविषये स्वल्पमपि न्यूनं भवेत्तर्हि सोयं दोषः सर्वेषां बुद्ध्यारूढो भवेत्। यतो हि न तत्र कथाप्रवाहः प्रकरणसंदर्भो वा सहायको[1] भवितुमर्हति। अतएव हि मुक्तककाव्यनिर्माणं समर्थकवीनामेव कार्यमित्याहुर्ध्वन्यालोक[2] काराद्यः। मुक्तकानि च यदि रसनिर्भराणि निष्पद्यन्ते तर्हि महती सेयं साहित्यसंपत्तिः, पूर्णा च सेयं साहित्यसेविसमाजे सुप्रतिष्ठा नूनम्। यथा हि चिरात्सुप्रसिध्यति—

"अमरुककवेरेकं पद्यं प्रबन्धशतायते" इति।

# मुक्तावल्या निर्माणसमयः

प्राचीनस्य श्रीमाधवसिंहमहाराजस्य शासनसमयो यो हि कलानिधिमहाभागस्य आयुषः पश्चाद्भाग आसीत्, स एव पद्यमुक्तावल्या निर्माणसमयः। अस्यां हि नरपालेषु—जयसिंहमहाराजमारभ्य माधवेन्द्रपर्यन्तानां जयपुरधराधीशानां वर्णनमुपलभ्यते। यद्यपि इतः पूर्वस्य श्रीजयसिंहपितुः श्रीविष्णुसिंहवरणिपालस्याऽपि यशोवर्णनम [ पद्यमुक्तावली श्लो० ३३५--३३६ ] अत्रोपलभ्यते, किन्तु प्राधान्येन राज--यशोवर्णनं माधवसिंहनरेन्द्रस्यैव। अन्यान्यविषयाणां यदि कानिचित् पद्यानि प्रक्रान्तानि स्युस्तर्हि चित्रकाव्यरूपेण, ऋतु-वर्णनविधया वा माधवेन्द्रमहोदयस्य यशोवर्णनपराणि पद्यानि प्रचुरमुपलभ्येरन्। चित्रेषु बहुधा कामधेनुबन्धचतुष्पुष्प--द्विपुष्पहारबन्ध--कल्पतरुबन्ध--कपाटबन्ध--गजबन्धप्रभृतीनि चित्रकाव्यानि सन्ति। एतेषामुद्धारः, चित्रलेखो वा नैतेषु पुरातनेषु पत्रेषूपलभ्यते। सत्यं त्विदमस्ति यत् तत्तेषां पुरातनपुरुषाणां पुस्तकानि अनधिकारिसन्तानानां हस्तपतितानि' दैववशादेव सुरक्षितान्यतिष्ठन्। अन्यथा प्रचुरपरिमाणे तेषां भ्रंश एवाऽभवत्। अत्रापि सेयमेव दशा। राजाज्ञया निर्मितानि महामहान्ति, परमपरिश्रमप्रसूतान्यपि पुस्तकानि पूर्णरूपेण न सन्ति तत्तेषां ग्रन्थकाराणां गृहेषु। तानि हि तैस्तै राजभिर्निर्मापितानीति कृत्वा तेषां संपत्तिरेव परिगण्यते स्म। अतएव पूर्णरूपेण प्रतिलिपिग्रहणमपि तत्तेषां ग्रन्थानां क्रूरदृष्ट्या दृश्यते स्म राजकीयैः पुरुषैः। कदाचित्प्रतिलिपिग्रहणेऽपि--यस्मै कस्मै चित्पुरुषाय तेषां प्रदर्शनमासीद् घोरोऽपराध इव।

स्वानुभूतमिदम् अद्य रहस्यत्वेऽपि विदुषां संमुख प्रकाशनीयं भवति। येन हि चिराद्रहस्यभारं बिभ्रतो हृदयस्य लघुतेवाऽनुभूयते। श्रीमतो माधवसिंहमहाराजस्य(द्वितीयस्य) शासने आसीद्भारतेऽस्मिन् गौराङ्गाणां साम्राज्यम्। भारतसाम्राज्यप्रबन्धेन पुरातनसाहित्यस्य

---

१–"पूर्वापरनिरपेक्षेणाऽपि हि येन रसचर्वणा क्रियते तदेव मुक्तकम्" लोचनम्।

२–"महाकविव्यपदेश एवंविधरचनाभिरेव भवति" ध्वन्यालोकलोचनम्।

अन्वेषणार्थम्, प्राप्तानां पुरातनग्रन्थानां प्रकाशनार्थं चासीदेकः पृथगेव प्रबन्धविभागः। तद्विभागप्रेरिताः पुरुषा बहुधा राजस्थानेऽस्मिन् प्राचीनसाहित्यान्वेषणार्थं प्रतिवर्षमभ्रा-म्यन्। किन्तु बहुधा ते निराशा एव पर्यटन्। न तैर्वराकैः राजस्थानीयस्य बहुमूल्यस्य साहित्यगुप्तनिधेरनुसंधानमपि प्राप्यते स्म। अहं स्वानुभूतं निवेदयामि—राजकीयैः राजहर्म्यमालापुस्तकालयाऽध्यक्षैः १ वयःसन्धिमुपगतः राजहर्म्यमालासु गतागतं कुर्वन् पुरा निभृतनिभृतम्, किन्तु अतितीव्रतयाऽहं निर्भर्त्सितोऽभूवं "यत् त्वत्पूर्वजैर्निर्मितानीति कृत्वा पुरातनानि तत्तानि साहित्यपुस्तकानि न त्वदीयवंशजानाम्। सन्ति तानि हि राजकीयानि। अतएव तत्तेषां पुस्तकानां न यस्य कस्यचित्संमुखे अनुसंधानमपि सूचनीयम्, विशेषतश्च वैदेशिकशासकानां समक्षम्।" एतस्य गुप्तीकरणस्य उत्तमः परिणामस्तु भवेदेव, किन्तु घातकः परिणामः अस्मत्सदृशानां पक्षे सोयं प्रतिफलितोऽभूद् यद् बहवो ग्रन्था गुप्तीकृताः सन्तः शनैः शनैः क्रूरकालस्य दुष्प्रभावेण सर्वदार्थं लुप्तीकृता एवाऽभूवन्।

मत्पूर्वजाः सुदूरदूरतमाद् 'मद्रास' प्रदेशाद् राजस्थानेऽस्मिन् विश्वप्रसिद्धेन निज-वैदुष्येण समागता अभूवन्, परःसहस्रमुद्रावार्षिकीं सुस्थिरां ग्रामादिसंपत्तिं चाऽलभन्त, तैरस्मिन् देशे आगमनादारभ्य अद्यावधि अभूतपूर्वा अनितरसाध्या च साहित्यसेवा कृताऽभवत्। नेयमभिमानस्य कथा, प्रसङ्गादेव तदिदं निवेदनीयमभवत्-यद् आसां पङ्क्तीनां लेखकपर्यन्तमपि पूर्वजप्रक्रान्ता सेयं साहित्यनिवेदना [ 'लोकसेवा' ] न नाम निरुद्धाऽभूदी-श्वराऽनुग्रहेण। किन्तु पूर्वोक्तकारणेन, मध्यकाले अनधिकारिजनस्वातन्त्र्येण च, मत्पूर्वज-निर्मिता अपि मदीयगृहस्थ ग्रन्था न मत्सविधे। न च बहूनां ग्रन्थानामनुसंधानमात्रमपि मम, मद्वंशीयानामन्येषां वा अस्ति। बहवो ग्रन्था मया बुन्दीनगरे अकस्मादुपलब्धाः। बहवः अत्रत्येभ्यः प्राचीनपुस्तकसंग्रहालयेभ्यो विदिताः। बहुतराश्च सुदूरदूरवर्तिभ्यः "भाण्डारकर ओरिएण्टलरिसर्च इन्स्टिटयूट, पूना" प्रभृतिभ्यः साहित्यसंग्रहसंस्थानेभ्यो-ऽधिगताः। सोयं वृत्तान्तो मया 'साहित्यवैभव' 'जयपुरवैभव' २ प्रभृतिग्रन्थेषु निजपरिचय-प्रसङ्गात्प्रकटीकृतः प्रायशः। अत्रोल्लेखस्य तदिदमेव प्रयोजनं यत् ये संदर्भाः कविवरैः प्रतिभास्फूर्तौ स्वस्वगृहेषु समये समये संगुम्फितास्ते तत्कवीनां स्वीयं साहित्यसंग्रहं व्यतिरिच्य कुत्र वाऽन्यत्रोपलभ्येरन्? तेषु साहित्यसंग्रहस्थलेष्वेव चेद् दैववशात्प्रणाशः प्रविशेत्तर्हि प्राचीनसाहित्यसंग्रहस्य का वा प्रत्याशा? नैवंविधानि पुस्तकानि कविभिः स्वयं प्रसेधितानि, बहिः प्रकाशनार्थं वा निर्मितानि, येन तेषां प्रतिलिपयोऽन्यत्र रसिकानां समीपात्समुपल-भ्येरन्। 'पद्यमुक्तावली' सदृशानि मुक्तककाव्यानि निर्मातुः आकस्मिकं प्रतिभाविजृम्भितम्। एतानि हि तत्तत्कवीनां गृहसंस्थितात् संग्रहमात्रादेव प्राप्तव्यानि। ततश्च—पद्यमुक्तावल्या अप्येकं पुस्तकं जीर्णपुस्तकेषु तादृगुपलब्धं यस्य प्रारम्भे पर्यवसाने च कतिचित्पत्राणि खण्डितानि। ग्रन्थारम्भे ग्रन्थान्ते च मङ्गलादीनि यानि किल कर्तव्यानि सर्वेष्वपि साहित्य-निबन्धेषूपलभ्यन्ते तान्यपि मुक्तावल्यामस्यां न सन्तीति विलोकयेयुः पाठकमहाभागाः।

---

१—'पोथीखाना'। २—एतदादीनि पुस्तकानि—"मञ्जुनिकुञ्ज, पृथ्वीराजरोड़, जयपुर, राजस्थानम्" इति संकेते एतत्पङ्क्तीनां लेखकसकाशात् प्राप्तव्यानि।

कारणमेतस्यैतदेव, यत्कठिनतया उपलब्धे जीर्णपुस्तकसंचये यादृशं च यावच्च यादृगवस्थापन्नं च पुस्तकमिदमुपलब्धं तदेव महत्सौभाग्यमिति अभिनन्द्य संगृहीतं मया। प्रकाशयितुं प्रयत्नश्चाऽस्याऽक्रियत।

## मुक्तावल्या विशेषः

पुस्तकेऽस्मिन् महत्त्वमिदमेव यदिदं ग्रन्थकर्तुर्जीवनकालस्य मूर्तिमानितिहास इव। समयोऽपि स तादृशोऽभूद् यत्र परस्परं युध्यमानयोर्द्वयोर्भ्रात्रोर्मिथः संघर्षः, एकस्य विजयश्च स्वनेत्रयोः संमुखं दृष्टोऽभूद् ग्रन्थकारेण। द्वयोरनयोर्ये ये संबन्धिनः, मन्त्रणादातारः, प्रियकर्तारश्चाऽऽसन् तैः सर्वैरेव साकं ग्रन्थकारस्य संपर्को, निकटसंपर्कश्चाऽभवत्। पुस्तकेऽस्मिन् सर्वासां तासामेव व्यक्तीनां वर्णनमुपलभ्येत। तेषां वास्तविकं रहस्यं तस्मिन् काले जातासु घटनास्वेवान्तर्हितम्। न तस्य रहस्यस्याऽस्मिन् समये स्पष्टाऽवबोधस्योपायोऽप्यस्ति, तस्य समयस्य इतिहासस्याऽनुपलम्भात्। राजस्थानीयेतिहासस्य ये विशिष्य बोद्धारोऽभवन्, तेऽपि करालस्य कालस्य कुटिले क्रोडे साम्प्रतं विश्राम्यन्ति। जयपुरीयेतिहासस्य विशेषाभिज्ञाः विद्याभूषण–श्रीहरिनारायणपुरोहितादयः परिगण्यन्ते स्म, ये हि परम्परातो जयपुरराज्यस्याश्रिताः, स्वसमये राजकीयाऽधिकारिणश्चाप्यासन्। तेऽपि साम्प्रतं न सन्ति। जयपुरराजकीयहर्म्यमालासु साम्प्रतं राजस्थानीयशासनतन्त्रस्य प्रभावः। यानि च स्थानानि जयपुरधराधीशस्य व्यक्तिगतसंपत्तिरूपाणि, तेष्वपि अन्यादृश एव रक्षाप्रबन्धः। अतएव न तेभ्योऽपि प्राचीनेतिहासपरिज्ञानस्याऽवकाशः। अतएव पुस्तकेऽस्मिन् येषां येषामैतिहासिकपुरुषाणाम्, स्थानानां वा सूचनाऽस्ति, तेषामपि परिज्ञानं यत्किञ्चिज्जातं तदेवात्र निवेदनीयं भवेत्। अवशिष्टं विशिष्टं रहस्यं कदाचित्समय एव बोधयेत्, इति कृत्वैव संतोष्टव्यं भवेत्।

## ग्रन्थकारस्य परिचयः परिकरश्च

कविकलानिधिमहाभागस्य पूर्वजा गौतमसगोत्रीयवेल्लनाटीयतैलङ्गब्राह्मणा मद्रासप्रान्तीय–तैलङ्गप्रदेशादुत्तरदेशेपूपगताः। व्यतिगतो यस्य भूयान् समयः। एतद्वंशपरम्परायां वैदिककुलोत्तंसः श्रीबाबीजीदीक्षित एव तस्मिन् समये सर्वतः प्रसिद्धो गोत्रप्रख्यापकश्च समभवत्। अतएव एतद्वंशवर्णनेतिहासपुस्तके "कुलप्रबन्धे" * 'बाबीदीक्षितमूलकः..........

जयाय भवतान्मे वंशकल्पद्रुमः॥' इत्युपसंहारो दृश्यते।

सोयं वंशो दक्षिणापथतः काशीम्, काशीतः प्रयागम्, प्रयागाच्च तात्कालिकेन बान्धवदेशनरेशेण देवर्षिप्रभृतिग्रामशतकं समर्प्य एतद्वंशस्य प्रमुखपुरुषः श्रीमण्डलदीक्षितो निजगुरुपदे स्थापितः। ततश्च शनैः शनैः अनूपनगर [ 'अनूपशहर' ] दिल्ली, भरतपुरकामादिषु संपर्कं स्थापयन्तो राजस्थानं प्रापुरेतद्वंशीयाः पूरुषाः। तत्र बुन्दीराज्ये समधिक–

---

* 'साहित्यवैभवस्य' वंशवीथी द्रष्टव्या।

संमानितास्ते स्वनिवासं कल्पयामासुः। ततः अनिरुद्धसिंहात्मजश्रीबुधसिंहस्य शासनसमये एतद्वंशरत्नं श्रीमान् कविकलानिधिमहाभागस्तस्थौ भूयासं कालं यावद् बुन्दीराज्ये। ततो राजाधिराजेन श्रीजयसिंहमहाराजेन अश्वमेधयज्ञार्थं सविनयया वाचा याचितः 'आम्बेर' ÷ राजधानीमाययौ। ततः कविकलानिधिमहाभागस्य समक्षमेव जयपुरराजधान्या एतस्याः शिलान्यासोऽभवत, यस्य वृत्तान्तः कलानिधिमहोदयेन राजाज्ञया निर्मिते 'ईश्वरविलासे' विस्तृत्य वर्णितोऽस्ति।

## श्रीमद्वल्लभसंप्रदायाचार्याः

जयपुरनिवाससमये ये ये कविकलानिधिमहाभागस्य निकटसंपर्के, राजकीयपरिकरे वा ऐतिहासिकाः पुरुषा आसन् तेषां वर्णनं पद्यमुक्तावल्यामस्यामुपलभ्येत। तेषु सजातीय-संबन्धेन, देशप्रख्यात-संप्रदायाचार्यरूपेण च श्रीमद्वल्लभाचार्यचरणानां पीठस्थिताः शुद्धा-द्वैतसंप्रदायाचार्या अपि कविकलानिधिमहोदयस्य वर्णनीया अभवन्। एतस्मिन् समये राजस्थाने श्रीनाथद्वार-काँकरोलीप्रभृतिपरिसरे वैष्णवसंम्प्रदायस्य प्रभावः प्रकामं प्रसृतो-ऽभवत्। तात्कालिकाः उदयपुरस्य महाराणामहोदयाः काँकरोलीविराजमानश्रीद्वारकाधीश-पीठं गुरुसंस्थानत्वेन समाद्रियन्त।

आसीच्च तस्मिन् समये तत्पीठमलंकुर्वाणः श्री.व्रजभूषणलालगोस्वामिमहाभागः। महोदयोऽयं न केवलं सजातीयत्वेन, अपितु देशप्रख्यातेन वैदुष्येणाऽपि कविकलानिधि-महोदयं मुहुर्मुहुः संमानयति स्म। प्राप्ते प्रसङ्गे ससमादरं समाह्वयति स्म तेषु तेषु महामहोत्सवेषु। कविकलानिधिमहोदयस्य बहुतराः कृतयः काँकरोलीसंस्थाने अद्याऽप्युप-लभ्यन्ते, इति हि तत्रत्यविद्याविभागाद्विदितमभूत्प्रसङ्गेन केनचित्। गोस्वामिवरश्रीव्रज-भूषणलालमहोदयस्य प्रशंसापरं पद्यं यथा—

'सौजन्यव्रज-सौहृदव्रज-सुहृत्कार्यव्रज-श्रीव्रज-
श्रीशालिव्रज-सद्यशोव्रज-बहुश्रेयोव्रजानां भवान्।
एको भूषणतां बिभर्ति भुवने तेनैव सत्कीर्त्यते
लोकेऽस्मिन् व्रजभूषणेत्यभिधया जीयात्सहस्रं समाः ॥१६०॥"

महाराजश्रीमाधवेन्द्रेण श्रीव्रजभूषणलालमहाभागस्य सकाशादेव वैष्णवसंप्रदायस्य दीक्षा गृहीताऽभूदित्यपि पद्यमुक्तावल्यामस्यां समुपलभ्यते। तत्समये च श्रीद्वारकाधीशपीठे श्रीव्रजभूषणलालमहोदय एव पीठाधीशोऽभूदित्यपि तेन परिज्ञायते यथा—

÷ यथा हि वर्णितं 'रावलचरित्रे' देवर्षिश्रीमण्डनकवीन्द्रेण—
"बुन्दीपति बुधसिंहसों लाये मुखसों जाचि।
आइ रहे आम्बेर में प्रीतिरीति बहुभाँति ॥"

श्रीशालिग्रजभूपविप्रविदितश्रीद्वारकेशप्रभोः
पादाम्भोजयुगप्रपत्तिपरम श्रीमाधवत्त्माधव ।
शौर्यौदार्यविदार्यवार्यपरहृत् प्राज्ञार्यदारिद्र्यभी–
संभारद्रविणाम्बुवर्षजलदो जीयाः सहस्रं समाः ॥२६२॥

काँकरोलीस्थश्रीद्वारकाधीशस्य भूरिशः स्तुतिरुपलभ्यते । किमधिकम्, १२४ तम-पद्यादारभ्य १३२ तमपद्यपर्यन्तमिदमष्टकमेवास्ति । अत्र तदिदमपि चातुर्येण व्यञ्जितं यदिदं पीठमारम्भादद्यावधि पुष्टिमार्गसंप्रदायाचार्यश्रीमद्वल्लभाचार्यस्य, तद्वंशजानां चाधिकारे स्थितमस्तीति । यथा—

श्रीमद्वल्लभदेवलालितपदाम्भोजद्वयभ्राजितः
श्रीमद्विट्ठलनाथभावितलसल्लीलाललामाकृतिः ।
तद्वंशोद्भवपुत्रपौत्रनिवहैरद्यापि संसेवितः
श्रीभूशोभनशीलपार्श्वयुगलः श्रीद्वारकेशोऽवतु ॥१३१॥

स्तुतिर्भक्तिः प्रणतिश्चापि श्रीद्वारकेशप्रभोरद्भुतैव पद्येनैकेन प्रकटिता ग्रन्थकारेण, यथा—

'एके त्वाराधयन्ति द्विपहयशिबिकास्यन्दनाद्यैस्तथैके
मुक्तामाणिक्यरत्नैर्जगति, तदपरे स्वर्णभारैरनेकैः ।
श्रीश श्रीद्वारकेशप्रभुवर ! तव तेषां च तेषां च तेषां
स्थाने स्थाने मया त्वं ध्रुवमुपचरितोऽस्येकयैव प्रणत्या ॥१०२॥'

किं च श्रीमद्वल्लभाचार्यचरणानां पुत्रस्य श्रीमद्विट्ठलनाथमहाप्रभोरपि स्तुतिरति-भक्तिपूर्णा अपूर्वैव समुपनिबद्धा कविकलानिधिमहाभागेन । यथा—

'गोधूलौ धूलिधूम्राननरुचिररुचिश्चारयन् गाः समन्ताद्
गोपालीजालपाली कलमुकुटधरो धारयन् धाम धन्यम् ।
मन्यन्ते ब्रह्मसंज्ञं श्रुतिकुलतिलका यं वदन्तो नितान्तं
पायात्सायाह्नकाले कलिमलमथनो वाल्लभिर्विट्ठलेशः ॥२२६॥

एतदतिरिक्तम्, 'गोपेन्द्र'नाम्नाऽङ्कितान्यपि कानिचित्पद्यानि मुक्तावल्यामुपलभ्यन्ते। यथा—

'वाणीं चैव भुवं च सर्वजनतादैन्यापहारीत्यतो
धर्मं चैव धनं च साधुसुहृदां दृष्टिसुधावृष्टिभिः।
नित्यं पासि, बुधैरुपासितपदो भासि, प्रयासि प्रथां
श्रीगोपेन्द्र इति प्रकाशितगुणो विद्वद्गणैर्गीयसे ॥५२॥'

अग्रे च—"गोविन्द श्रीलगोपीजनहृदयपरानन्ददो वल्लभस्त्वम्०" इत्यादिकं 'कामधेनुबन्धात्मकं पद्यमस्ति। यस्य हि अर्थस्पष्टीकाराभावाट्टीका नाऽभूत्साध्या। तत एव पूर्वश्लोकात्परा '१५६' तमी पद्यसंख्यापि नात्र श्लोके प्रदत्ताऽस्ति। एतन्नामाङ्कितानि पद्यानि तस्मिन् समये विराजमानस्य कस्यचित् पुष्टिमार्गीयवैष्णवसंम्प्रदायाचार्यस्यैव सन्तीति विवेकिनां संमतिः। स्पष्टं परिचयाभावान्नात्र तत्परिचयोल्लेखोऽभवदिति अनुमानत एव संतोष्टव्यं भवेत्।

## बुन्दीनरेन्द्रः श्रीबुधसिंहभूपतिः

श्रीजयसिंहमहाराजाधिराजस्य परमेण समादरेण जयपुराऽऽगमनात्पूर्वं श्रीमान् कविकलानिधिमहाभागो बुन्दीराज्ये निवासं चक्रे। किन्तु जयपुरमधिवसन्नपि सोऽयं बुद्धसिंहनरपालस्य समादरं न विसस्मार। अतएव प्रतिभास्फूर्तिसमये श्रीबुन्दिनरपालोऽपि बुद्धिमधितष्ठौ। दृश्यते पद्यमिदं मुक्तावल्याम्—

"देव श्रीबुद्धसिंह त्वदसिजलधरोल्लासिसत्कीर्तिनीरे
तुङ्गप्राच्यादितीरे भवसरसि भवत्साधुवादोर्मिसंघे।
नक्षत्राण्येव हंसाः परिलसितनभोनीलिमा शैवलौघः
पूर्णेन्दुः पद्ममस्मिन्, मधुरमधु सुधा, देववृन्दा मिलिन्दाः ॥१८७"

## भरतपुरभूस्वामी सूर्यमल्लः

बुन्दीनरेशस्य समीपे समागमनात्पूर्वं कविकलानिधिमहोदयः कञ्चित्कालं भरतपुरराज्येऽपि तस्थौ। तत्र हि 'दुर्गाभक्तितरङ्गिणी' नामको ग्रन्थो राजेच्छया निर्मितोऽभूदिति बहूनां कथनम्। एतत्सत्यमिति प्रतीयते। यतो हि पद्यमुक्तावल्यां पद्यद्वयं सूर्यमल्लनामाङ्कितमुपलभ्यते यथा—

'इतो हैन्दवीं सृष्टिमानन्दयन् स्वैः०' इत्यादि ॥१६१
उद्यन् दोषाकरस्या"० ॥१७८

# ग्रन्थकारस्य पिता श्रीलक्ष्मणभट्टमहाभागः

कविकलानिधिमहोदयस्य पिता श्रीलक्ष्मणभट्टमहाभागः परमवैदिकोऽपि मीमांसा-सांख्य-योग-व्याकरणादिशास्त्राणां प्रकाण्डपण्डितोऽभूदिति मुक्तावलीतः परिज्ञायते' यथा हि-

गच्छत्यान्वीक्षिकीयं त्रयमथ विशति व्याकृतिर्वह्निमध्ये
मीमांसा मूर्च्छिता ऽभूदनिशमुपनिपत् खेदिता वेदनाभिः ।
भग्ना सा कापिली गीर्गुरुविरहगता योगगीर्भग्नभोगा
याते निर्वाणमार्तेर्जितसुकृतफले श्रीगुरौ लक्ष्मणाख्ये ॥ ७१

एवं 'सहैव सर्वविद्याभिः इत्यादि ॥ ८८

अविद्या प्रवादीत्–इत्यादि ॥८९

'श्रीलक्ष्मणगुरुचरणे कुर्वति कैलाशधामविश्रामम् ।
तद्वाञ्छयैव सकलाः साङ्गोपाङ्गा यजुर्वेदाः ॥ ९०,

# मध्यदेशस्य विशेषतः परिचयः

कलानिधिमहाभागः पूर्वदिग्भागे–राजस्थाने च यथा निजपाण्डित्येन, अनुपम-कविताप्रभावेण च प्रसिद्धिं परिचयं च स्थिरीचकार, तथा मध्यप्रदेशेऽपि भूयांसं कालं यावत्तस्थौ, इति पद्यमुक्तावलीतः प्रकटीभवति । अत्र हि महाकालस्य स्तुति—गीतिर्यथा-'मम मतिरतिविरसति ०' २

भगवतः शंकरस्य सप्तविभक्तिभिः स्तुतिः—"ओं तत्सद्ब्रह्मरूपः० ॥ ७२" इत्यादितः प्रारभ्य "विभक्तिसप्तकम्० " ॥७६ इतिपर्यन्तम् ।

एवं नर्मदायाः स्तुतिः । ६७ ॥ नर्मदाया नीराजनम्–"जय जय शिप्रे रेवे० इत्यादि २६६ ॥

भगवत ओंकारेश्वरस्य नीराजनम् । " जय जय ओंकारेश" इत्यादि ॥२७०

मालवस्त्रीणां गति–रूप–देहलतादीनां वर्णनानि "८३–८४–८५"पद्येषु ।
यथा मन्दहासः—

दारुण्योद्भेदभाजां क्वचिरणरणत्किङ्किणीनूपुराणां
प्रोद्यन्मन्दानिलान्दोलितपरमपटस्पष्टनर्मस्थलानाम् ।
गम्भीरावर्तनाभीलसदुदरवली–रोमवल्ली––युताना—
मेतासां मालवीनां कलयति मदनोन्मादनं मन्दहासः ॥ ८२॥"

भगवत्याः श्रीगङ्गायास्तु स्तुतिर्द्विविधेषु वृत्तेषु । "सुधासङ्गै रङ्गै" रित्यादिका शिखरिणीच्छन्दस्सु श्लो. २२ तः २९पर्यन्तमष्टकरूपेण । श्लो. ४३तः प्रारभ्य ५१ पर्यन्तमार्याच्छन्दोभिः॥

## "भट्टराजा" भट्टसदाशिवमहाभागः

[ श्लो० २०८, २०९ ]

सदाशिवमहाभागस्य पूर्वजानां पुरा 'डूँगरपुर' प्रदेशीयः सागवाडानामको ग्रामः परम्परातोऽभिजनो बभूव । एष हि जयपुरनरेन्द्रस्य श्रीमाधवसिंहस्य ( प्रथमस्य ) न केवलं विद्यागुरुरेव अपि तु समये समये परामर्शदायकोपि बभूव । एष हि महाभागो गुर्जरब्राह्मणान्तरजातीनामौदुम्बरभट्टानां वंशे प्रसूतः । सोयं महोदयो मात्रजीभट्टस्य पौत्रः, रत्नेश्वरभट्टस्य च सुपुत्रो बभूव । भट्टसदाशिवमहोदयः उदयपुरराज्येश्वरस्य महाराणा जगत्सिंहस्य विशेषतः कृपापात्रमासीत् । जयपुरनरेन्द्रः श्रीमाधवसिंहः कौमारावस्थायां निजमातुलस्य श्रीजगत्सिंहस्य निकटे यदा ह्युदयपुरे न्यवात्सीत्तस्मिन्नेव समये सदाशिवभट्टाभागोऽस्य विद्यागुरुरभवत् ।

अस्मिन्विषये प्रसिद्धमस्ति यत् उदयपुरमहाराणाश्रीजगत्सिंहमहोदयेन निजभागिनेयोयं माधवसिंहो यदा योग्यो, गुणगणयुक्तश्चाभिवीक्षितस्तदा माधवसिंहस्य पाठनाय श्रीसदाशिवो न्ययुज्यत । किन्तु भट्टमहाभागेन प्रोक्तम्–"नाहं सामान्यो जोशी (प्रारम्भिकपाठकः)।यदि माधवसिंहो मां गुरुरिति मानयेत्तथैव च संमानयेत्, एवं माधवसिंहसंततयोऽपि मत्कुलप्रसूतान् संतानान् गुरुगौरवेण पूजयेरन्, तदैवाऽहमेतत्कर्मणि प्रवृत्तो भवेयम् ।", माधवसिंहस्तदिदं सहर्षं स्वीचकार ।कालान्तरे यदायं माधवसिंहो जयपुरनरपालो बभूव तदा भट्टमहाभागायाऽस्मै "भट्टराजा" इत्युपाधिं, प्रभूतां च भूसम्पत्तिं ( जागीर ) प्रदाय, ससंमानं जयपुरेऽस्मिन्नात्रासयत् ।

सोयं महाभागो १८०७ तमे विक्रमसंवत्सरे माधवसिंहेन सह उदयपुराज्जयपुरमागमत् । अस्मै प्रदत्ता सेयं प्रभूता ग्रामादिसंपत्तिरपि सदाशिवभट्टमारभ्य नानूलालभट्टपर्यन्तं सप्तपुरुषेषु यथावदनुवृत्ता बभूव । किन्तु १९३१ तमे खिष्टवत्सरे नानूलालमहोदये निःसंतानं स्वर्गमधिरूढे सेयं भूसंपत्ती राजसाद् बभूव । यत्किञ्चिदस्तु, सोयं सदाशिवोऽत्यन्तं प्रतापशाली, धनसमृद्धिसंपन्नः प्रभाववांश्चाऽऽसीत् । ब्राह्मणेषु

राजेत्वाऽऽसीत्' श्रीमाधवसिंहस्य, तत्तनयस्य श्रीप्रतापसिंहस्य च समये कान्यकुब्जब्राह्मणः "शुक्ला" ऽवटङ्को यो भोलानाथकवीश्वरो बभूव, तेन हि महाराजश्रीप्रतापसिंहस्य समये, सदाशिवभट्टस्य प्रीतये "कर्णकुतूहल"नामकं नाटकं निरमीयत। तत्रापि नाटकमेतदस्मत्त्वेव राजस्थानपुरातत्वमंदिरात् प्रकाशितमस्ति। प्रस्तावनायां सोयं सदाशिवो महता गौरवेण संस्मृतो बभूव यथा—

सूत्रधारः—आर्ये ! समस्तसामन्तनृपचक्रचूडामणिः भूमण्डलाखण्डलकिरीटरञ्जित-चरणारविन्दः श्रीरत्नेशतनयः औदुम्बरकुलालङ्कारो विघ्नराज इव विघ्नविध्वंसकारी सुरगुरुरिव कूर्मवंशगुरुः श्रीमान् भट्टसदाशिवोऽस्ति"—

"भूदेवेषु नतिर्मतिर्वितरणे, दीने दया भूयसी
प्रीतिः पुण्यकथासु भीतिरनिशं पापात् सुनीतिर्नये।
शूरत्वे कृतिरुन्नतिः सदसि वाक् सत्ये हरौ सज्जने
भक्तिर्भट्टसदाशिवक्षितिपतेः सर्वं परप्रीतये॥" इत्यादि

भट्टसदाशिवस्य वर्णनं 'कच्छवंशमहाकाव्ये' प्येवमुपलभ्यते—

"ते ते गदाधरमुखा अपि पल्लिवाला
औदुम्बरा अपि सदाशिवभट्टमुख्याः।
प्राक् सेविताङ्घ्रिमधुना फलदानदक्ष—
मन्वीयुरेनमृभृद्वत्तमिव द्विजौघाः॥ [सर्गः१२' श्लो. २६७]

उदयपुरादानीतस्य सदाशिवमहोदयस्य श्रीमाधवेन्द्रस्य समये राजकीयवर्गे भूयान् संमानोऽभवत्। सर्वेऽपि राजोपजीविनस्तमेनं नृपतिवत्संमानयन्ति स्म, अयमपि च मन्ये तेष्वौदार्यमसामान्यं दर्शयामास। अतएव व्रजभाषायामपि बहुधा कीर्तितः सोयं कविभिः। भोलानाथकवीश्वरेण भाषाकाव्यैरपि सोयमतिशयोक्तिभिरुपच्छन्दितोऽभूत्। तेषु "वर्णिका" रूपेण कवित्वमेकं यथा—

"पुण्य परताप ही को जाके द्वार डंका बाजै
कहै भोलानाथ सोर लंकालों कही को है
भुवभार काँधे जाके दयाभार हीमें सदा
लाजभार आँखिनमें पैजभार जीको है।

नृपति सदाशिव उदंवरपुरन्दर ज्यों
सुन्दर सभा को औ सिकन्दर मही को है

आप निरदंभ दंभ मेटति सदंभनि के
राजथम्भ विजैथम्भ जाके सिर टीको है ॥

राजदत्तगौरवात् शनैःशनैर्भट्टराजा इति प्रतिष्ठां गतस्य सदाशिवमहाभागस्य यथा राजकीयवर्गे संमानोऽभूत्तथा ग्रन्थकर्तुः कविकलानिधिमहाभागस्याऽपि दृष्टौ भूरि संमानः प्रगाढश्च परिचयोऽभूत् । किन्तु नानाराजभिर्दत्तभूरितरभूम्यादिसंपत्तेरपि स्वातन्त्र्यप्रियस्य, आत्माभिमानिनः कविकलानिधिमहाभागस्य स्वल्पेऽपि प्रातिकूल्ये जागर्तिस्म नैसर्गिकमात्मगौरवम्, यस्य हि परिचयः— "ज्वलतु जलधि-क्रोडक्रीडत्०" इत्यादि २४५ तमपद्यादवगम्यते । अत एव हि सीमापर्यन्तमेव सदाशिवमहाभागस्य गौरवमासीत्कविकलानिधेर्मनसि । सीमोल्लङ्घने तु त्वरितमेव एतस्य दृष्टिः परिवर्तते स्म । यस्य परिज्ञानं मुक्तावल्याः १७० तमात् "गुणवद्गणितो गुणिनाम्०" इत्यादिपद्याद् भवेत् । 'भट्टराजा' महोदयस्य स्मारकचिन्हं सम्प्रति राजवैभवसूचकं महाविशालम् प्रधानराजरथ्याविराजमानं गृहमेवाऽस्ति । यद्धि जयपुरनगरस्य प्रधानराजहर्म्यरथ्यायाम् ["सिरह ड्योढ़ी बाजार]" "हवामहल" समीपस्थश्रीगोवर्द्धननाथस्य मन्दिरपृष्ठस्याऽभिमुखं, विशालतया च प्राचीनं राजगौरवमद्यापि जागरयति जयपुरवासिजनानां मनसि । एतद्धि भवनं संप्रति राजतन्त्राधीनं श्रीहीनमिव विभाति । खेलति हि नियतिर्जनानां जीवनैर्धनैर्निधनैश्चेति कोऽत्र किं प्रतिविधातुं प्रभवेत् !"

## राजराजेश्वरीप्रतिष्ठापकः श्रीहरिहरमहोदयः

हरिहरमहोदयश्च 'मुक्तावल्याम्' स्थाने स्थाने वर्णितः ।

मुक्तावल्यां हरिहरमहाभागेन वर्णिता येयं राजराजेश्वरी भगवती निविडलताऽऽवृते मन्दिरे प्रतिष्ठापिता, तदिदं मन्दिरं जयपुरनगरस्य पूर्वोत्तरदिशि बंधगोपुराद् (बंध का दरवाजा) बहिः, आम्बेरनगरस्य समीपदिशि विराजते । एतस्य समीप एव 'मान बाग' इति प्रथितं प्राचीनमुद्यानमस्ति, यस्य जम्बूफलानि 'मानबाग का भोंरेल्या' नाम्ना जयपुरनागरिकेषु पुरा चिरात्प्रथितान्यासन् । भगवत्यास्तदिदं मन्दिरमतीव प्रभावशालि विद्यते । एतद्दर्शनेनैव स्पष्टमिदमवगतं भवति यदिदं स्थानमुपासकानां कृते वस्तुतः सिद्धपीठम् । भगवत्या मूर्तिवर्णनं तु लघीयसा मुखेन महती वार्ता । यतो हि राजराजेश्वर्या ध्यानं तन्त्रोपासकानां कृते परममनोहरं प्रसिद्धञ्च । वस्तुतो भगवत्याः सेयं मूर्तिरतीव मनोहारिणी, दिव्यप्रभावशालिनी च । एकवारं दृष्ट्वा, पुनः पुनर्दर्शनाय प्रेरयतीव । सोयं वृत्तान्तः १७६ तमे पृष्ठे विलोक्येत पाठकमहाभागैः ।

न केवलमिदमेव, अपितु चित्र-काव्यद्वाराऽपि हरिहरमहाभागस्य वर्णनं कृतं ग्रन्थकृता। यथा हि २५४ तमे पद्ये २५५ तमम् आर्यापद्यमेतद्वर्णनपरं निःसरति। एवमेव "हर्षादो विहितः" इत्यादिके शार्दूलविक्रीडितपद्येऽपि चित्रविधया 'हरिहरः' इति नाम निस्सरतीति विलोक्य प्रमोदेरन् पाठकमहाभागाः। ततश्चैवंविधचित्रवर्णनेन सोयं महाभागस्तस्मिन् समये राजपूजितः, प्रभावशालीति स्वयमनुमातव्यं भवेत्, यावत्किल एतत्संबन्धीतिहासो न लभ्येत। पद्यमिदं १५६ तमम्।

# मथुरापुरी, देवोत्सवाश्च

कविकलानिधिमहाभागस्य विवाहादिसंबन्धेषु सजातीयमहोत्सवेषु वा मथुरायां गमनाऽऽगमनायोरवसरोऽभवदिति परम्परातः शृणुमः। मुक्तावल्यामेतस्योपलभ्येत प्रतिभासः। श्लोकेषु १४, १५, १६ संख्यकेषु 'समुदितमुदितश्रीवैष्णवा०' इत्यादिषु दृश्यते मथुरापुर्याः प्रशस्तिः। मद्रासप्रान्तवासिनस्तैलङ्गाद्याः प्रायः 'थ' कारस्य 'धकारेण' परिवर्तनं कुर्वन्तो दृश्यन्ते। कविकलानिधिमहाभागस्याऽपि सोयं निसर्गः प्राप्यते षोडशे पद्ये—

का मधुरा बत नगरी कामधुराधरणधीरधौरेयी।
गलितकलङ्कामधुरा कामधुराशां जनायतो न फलवती ॥१६॥

भगवतो मत्स्यावतारस्य बलरामस्य च शब्दालंकारसौष्ठवेन साकं रुचिरैव स्तुतिरुपलभ्यते मुक्तावल्याम्। यथा मीनावतारः—

'दृष्ट्वा लीनाऽखिलार्थः समयमयमहीनाऽवबद्ध—स्वशृङ्गः
पीनापीनामहीनामुदधिचरमहीनावमुच्चैर्दधौ यः।
चीनामीशे कवीनामथ वचसि नवीनाच्छकीर्तिः स देवो
दीनान् कीनाशभीनाशननिपुणमतिः पातु मीनावतारः ॥१४८॥

बलरामस्य तु—'कम्बाबुम्राऽविलम्बाऽऽरवभृति०' इत्यादिः ॥१४६ शब्दालंकार-बाहुल्यादनयोरर्थष्टीकासहकारसाध्यः। अतएव श्लोकसंख्यानुसारेण मुक्तावल्यामेतद्विलोकनीयम्।

राजस्थानादिप्रान्तेषु भगवतः श्रीकृष्णस्य हिन्दोलामहोत्सवः प्रायशः श्रावणमास एव प्रसिद्धः, किन्तु प्रान्तान्तरेषु 'दोलोत्सवः' होलोत्सवेन सह संमिलति। कलानिधिमहाभागेन वैष्णवसंप्रदायानुसारं दोलोत्सवस्य वर्णना तादृशी कृता यत्र फाल्गुनजातोऽपि महोत्सवो मेघघटाप्रमोदमनुभावयति भावुकान् यथा—

'यन्त्रोद्यद्भूरिकाश्मीरजरुचिररसाऽऽसारवद्भिः समुद्यद्-
झम्पागम्भीरनिर्घोषितयुतवनितानूपुराऽऽरावकेकैः ।
रक्ताम्भोदायितं तद्दिशि दिशि चलितैः केलिधूलीसमूहै-
र्लोलाऽसौ हेमदोला कलयति ललितं तत्र विद्युद्विलासम् ॥६४॥

एवम् 'धम्मिल्लोल्लासि०' इत्यादिः ॥६५। 'अन्योन्याङ्गविलास०' इत्यादिः ॥६६ भगवतः श्रीकृष्णस्य शोभावर्णनं श्लो० ३१ तः प्रारभ्य ४२ पर्यन्तं सुरुचिरमालोक्येत। तत्रापि ३४, ३५, ३६, ३७ तमपद्येषु प्रत्येकं नवीनैव शब्दालंकारविच्छित्तिरवलोक्येत।

## प्रकृतिवर्णनम्

काव्येषु महाकवीनां यानि प्रकृतिवर्णनानि सहृदयानां चमत्कारकारिणि भवन्ति तान्यपि मुक्तावल्यां प्रचुरपरिमाणे प्राप्येरन्। सन्ध्याकाले सिन्दूरवर्णैर्घनैर्व्याप्तमेतद् गगनं शिबिरपटमण्डपायितमस्ति, घनमध्यान्निःसरन्तः सूर्यस्य दीर्घाः किरणाः पटमण्डपबन्धन-रज्जव इव राजन्त इति नवीनां कल्पनामुपस्थापयति कविः। यथा—

"सिन्दूराऽरुणरागरञ्जितघनश्रेणीमनोहारिणि
श्रीमन्मन्मथभूमिपालशिबिरस्तोमानुकारक्षमे ।
पश्य व्योम्नि विभान्ति संप्रति तिरोभूते प्रतीच्या दिशो
भानौ व्यायतवल्गुभूरितनिकातौल्येन सान्ध्यांशवः ॥ १८"

चन्द्रवर्णनपराणि ३०६तमात्पद्यादारभ्य ३०७–८–९ तमानि पद्यानि । एवं ३१६ तमं पद्यमपि तथा।

वसन्ते—मलयपवनवर्णनपराणि १३५–३६–३७ तमपद्यानि । एवं १०३ तममपि। ग्रीष्मवर्णनम्–२७१

मेघसमयः—३१८–१९, २०, २१, तमेषु पद्येषु रुचिरतया वर्णितः।

शरत्कालः—३२२ तमात्पद्यादारभ्य ३२५ तमं पद्यं यावत्।

मेघघटानां वर्णनं १३८ तमं पद्यमारभ्य १४२ तमं पद्यं यावत्।

हेमन्तर्तुस्तु—१८८तमं पद्यमालभ्य १८९, तथा २७५तः आरभ्य २८५ तमं पद्यं यावत्।

अत्र हि कविः कुकविमिव हेमन्तं वर्णयति चेत् [२८१ तमे पद्ये ], तत्रैव २८३ तमे पद्ये सुकविमिव वर्णयित्वा रचनाचमत्कारमात्मनः प्रकाशयति ।

## शब्दालंकारचमत्कारः

कविकलानिधिमहाभागेन अतिविनयपुरस्सरमुक्तं यत् "मया तर्कशास्त्रं साहित्य-शास्त्रं च किञ्चित्किञ्चिदधीतम्" [१०८ तमं पद्यम्] एतस्य हि स्थाने स्थाने परिचयोऽपि प्रदत्तः । व्याकरणस्य परिचयो बहिर्लापिकारूपेण दत्तो यथा –

"कः स्याच्छब्दो निषेधे, खलमनसि मतो को, गुणस्योपसर्गौ
कौ स्यातां यौ प्रकर्षाऽतिशयनिगदिनौ, कुत्र शस्तोर्द्ध रेखा ?
रुत्वं क्वाऽऽम्रेडिते, हौ प्रभवति पुरतस्तस्यतेः किं नु रूपं
कोक्तिः श्रीशाय पाद्यं विरचयति नखे, पाणिनेः किं नु सूत्रम् ।।

निषेधे शब्दः कः ? उत्तरम्-"न" । खलस्य मनसि गुणस्य कः ? उत्तरम्-लोपः ! [ खलस्य चित्ते गुणस्य सर्वदा लोपात् अभावात् ] । प्रकर्षस्य, अतिशयस्य च वाचकौ उपसर्गौ कौ स्याताम् ? उत्तरम्–"प्र-अति [ प्राति]" । ऊर्ध्वरेखा कुत्र प्रशस्ता ? उत्तरम्-"पदि [पादे] ।" कुत्र आम्रेडिते [ द्विरुक्ते ] रुत्वं भवति ? उत्तरम्–"कान् ।" तथा हि सूत्रं–"कानाम्रेडिते" । तस्यतेः ("तसु उपक्षये" इति धातोः) हौ ( सिप् आदेशभूते "हि" परतः ) किं रूपम् ? उत्तरम्–"तस्य" । सर्वार्थसमाहारेण पाणिनेः किं सूत्रम् ? "नलोपः प्रातिपदिकान्तस्य " ।

कर्तृगुप्तम्-१९८ क्रियागुप्तिचमत्कारः ५८ तमं पद्यमारभ्य ६४ तमं पद्यं यावत् ।

एतदनन्तरम्—१९२ तमं पद्यमारभ्य २०७ तमं पद्यं यावत् नानाविधाः शब्द-चमत्कारा विलोक्येरन् । तेष्वपि २०२, २०७ तमे पद्ये आपाततः नानाविधाभिः क्रियाभिः परिपूर्णे अपि समाप्तिश्चमत्कारपूर्णेनार्थेन भवति । २१२ तः २१४ पर्यन्तेषु पद्येषु भङ्गश्लेष-विरोध–यमकादीनां संसृष्टिश्चमत्कारमुद्भावयति । २१६–२१७ तमं पद्ययुगलं वर्णश्लेषस्य अत्यद्भुतमुदाहरणम् ।

अन्तर्लापिका–बहिर्लापिकारूपेण शब्दचमत्कारः स्थाने स्थाने विलोक्येत । तेष्वन्त-र्लापिका यथा—

"त्वन्नामस्मरणे नाथ यः स्यादचलसंवृतः ।
तस्यार्थपुण्यपापानां यः स्यादचलसंवृतः ।। २२४,

अत्र हि द्वितीयः पादश्चतुर्थेन यम्यते [अर्थाद् द्वितीयचतुर्थयोरावृत्तिः] इति यमकम्-अन्तर्लापिका चेति, द्वयोः सहयोगः । अर्थस्तु—

हे नाथ तव नामस्मरणे कृते यः ( भक्तः ) अचल ( पर्वत) वत् संवृतः गूढीकृतेन्द्रियः स्यात् अथवा अचलेषु पर्वतेषु गुप्तः स्यात् [तपो-ध्यानार्थमेकान्तवासी स्यात्], तस्य पुरुषस्य अर्थानां पुण्यानां पापानां "यः" यकारः, क्रमेण "अकारेण, चकारेण लकारेण च संवृतः (युक्तः) स्यात् [ अयं भावः-तस्य पुरुषस्य अर्थानाम् "अयः" [आगमनम्, "अयः शुभावहो विधिः'] पुण्यानां चयः संचयः अर्जनम् । पापानां लयः स्यात् । अतः "यः स्यादचलसंवृतः" इत्यत्र शब्दकृतश्चमत्कारः अपूर्व एवाऽनुभूयेत ।

कविगोष्ठ्यां "समस्या"पूरणं मार्मिकाणां चेतसि चमत्कारमुद्भावयति । अत्रापि "वर्णिका" रूपेण "शतचन्द्रं नभस्तलम्" इति नानाधा पूर्यते । [३६२ तः ३६५ पर्यन्तम् ] तेष्वेकं यथा—

"अतुलद्युतिभिर्देवसुन्दरीवदनोद्गतैः ।
अशोभिष्ट यशोभिस्ते शतचन्द्रं नभस्तलम् ॥ ३६५"

देवसुन्दरीणां वदनेभ्यो निःसृतैः [ देवाङ्गनाभिर्दिवि गीतैरित्याशयः ] अत एव चन्द्रवत् अनुपमकान्तिशालिभिः तव यशोभिः-गगनतलं शतचन्द्रयुक्तमिव अशोभिष्ट तव यशश्चन्द्रवत् निर्मलशुभ्रम्, अलौकिकद्युतिधारकं चास्ति । अतएव न केवलं भूमौ एव, अपि तु दिवि देवैरपि गीयते इति राजकीर्तिर्ध्वन्यते ।

अन्या समस्या—"मीनो जलमपहायाऽऽरोहति तरलं सकण्टकं वृक्षम् ।" इति। इयमपि बहुधा पूरिता । यथाहि—

"हरिलीलारसमुज्झति धावति विषयोन्मुखं यदा चित्तम् ।
मीनो जलमपहायाऽऽरोहति तरलं सकण्टकं वृक्षम् ॥ २६४"

हरिलीलागानाऽऽनन्दो भक्तस्य कृते जीवनभूतः, तं त्यक्त्वा सांसारिकविषयमार्गे [ कण्टकाकीर्णे ] अविश्रान्तभ्रमणं तथा, यथा मत्स्यः स्वजीवनाधायकं जलं विहाय कण्टक-वृक्षमारोहेत् । एतद्धि २८८ तः प्रारभ्य २६६ पर्यन्तमालोक्येत ।

माधवेन्द्रस्य यशोवर्णने तु स्थाने स्थाने कामधेनुवन्धादीनि चित्रकाव्यानि, तथा अन्येऽपि शब्दालंकारचमत्काराः कविना संघटिताः । यथा "श्रीमान् श्रीमाधव त्वम्०" इति २१६ तमे पद्ये "अत्र बहूनि छन्दांसि निःसरन्ति" इति मूलपुस्तके प्राचीना टिप्पणी। किन्तु न तेषामुद्धारः प्राचीनेष्वेषु पत्रेषु । शब्दचमत्काराः-२४८-२४६ ३५२, प्रभृतिपद्येषु बहुत्र प्रेक्ष्येरन् ।

पायान्नः शशिखण्ड० इत्यादिकं १६२ तमं पद्यमारभ्य–१६७ पर्यन्तमपि शब्दालंकारचमत्कारः प्रचुरो विलोक्येत ।

## प्रधानतया वर्ण्यो माधवेन्द्रमहाभागः

श्रीमतो माधवेन्द्रस्य स्थाने स्थाने नानाप्रकारैः कीर्तिवर्णनमालोक्येत मुक्तावल्याम् । किन्तु "वसन्तेनाप्यनेन अन्यान्य–संमान्यनरपालैरिव रत्नाद्युपायनप्रदान–पूर्वकं सेव्यसे, संमान्यसे चे"त्याह कलानिधिमहाभागः—

"उत्कूजत्कोकिलाश्वान् मलयमरुदिभान् भूरिचाम्पेयमल्ली--
कुन्दस्रक् स्वर्णमुक्ताभरणसमुदिताऽनेकपुष्पच्छलेन ।
रत्नान्येतानि यत्नान्मधुऋतुसमयाऽऽनीतमात्राणि ताव–
द्देव त्वं जैत्रयात्राफलसदृशतया सस्पृहाचेगृहाण ॥१००॥

## कलानिधिमहाभागस्य प्राकृतभाषादिपाण्डित्यम्

श्रीमान् कविकलानिधिमहाभागो न केवलं राजस्थाने एव, अपितु मोगलसम्राट्–क्षत्रियराट्पालिते समग्रेऽपि भारतेऽस्मिन्नासीदप्रतिमः प्रतिभावान् महाकविः, वेदशास्त्रादि--संपन्नः प्रकाण्डपण्डितश्चे त्युक्तवानस्मि पूर्वम् । अस्य हि न केवलं संस्कृतसरस्वतीसंबद्धैव सुकवितासूक्तिः समुपलभ्यते, अपि तु व्रजभाषानिबद्धा अप्यनेके कविताग्रन्था राजाज्ञया ऽवतीर्णाः प्रसिध्यन्ति राजस्थानीयेषु साहित्यसंग्रहालयेषु । किं बहुना, प्राकृतभाषा, या हि तस्मिन् समये भारतमात्रेऽप्यप्रचलिताऽऽसीत्तस्यामपि कलानिधिमहाभागस्य प्राप्येत प्रकामं प्रौढता नूनम् । माधवेन्द्रकीर्तिवर्णनपराः प्राकृतगाथाः प्रेक्ष्येरन् मुक्तावल्याम् । तासां वर्णिकारूपेण द्वित्रा यथा—

"माहवणरिन्द तुह करसमत्तकामो सुरद्दुमो तवइ ।
सुरणइकूलम्मि जडावक्कलसंभारएहिँ आवरिओ ॥२३३

आणीदं विजआए माहव तुव कित्तिमुत्तिअमणग्घम् ।
धरिऊण इक्ककण्णे पइट्ठिआ पवई हरद्धङ्गे॥२३४

सूरो चन्दो इन्दो तुलासु माहवणिवेण संतुलिदो ।
अहि भुइ गुरुओत्ति तुमं लहुवा अण्णे दिअं जादा ॥२३०

माहवणिवकित्तीओ फुल्लिअ--विअइल्ल—मालइ—वणाइं ।
सअलकइमहुअराणं साणन्दविणोअकारणाइँ धुअम् ।।२२७।।

## प्राकृतार्याः

माधवनरेन्द्र तव करसमाप्तकामः सुरद्रुमस्तपति ।
सुरनदीकूले जटावल्कलसंभारैराघृतः ।।२३३

आनीतं विजयया माधव तव कीर्तिमौक्तिकमनर्घम् ।
धृत्वा एककर्णे प्रविष्टा पार्वती हरार्द्धाङ्गे ।।२३४

सूर्यश्चन्द्र इन्द्रस्तुलासु माधवनृपेण संतुलिताः ।
असि भुवि गुरुक इति त्वं लघवोऽन्ये दिवं याताः ।।२३०

माधवनृपकीर्तयः फुल्लविचकिलमालतीवनानि ।
सकलकविमधुकराणां सानन्दविनोदकारणानि ध्रुवम् ।।२२७

एवमिव सर्वभावेन श्रीमतो माधवेन्द्रस्य कीर्तिज्योत्स्ना प्रसारिता कलानिधिमहाभागेन। नानाछन्दांसि, नानालंकाराः कामधेनु—छत्र—चामरादयो नानाचित्रवन्धाश्च परिश्रमपूर्वकं निगुम्फिताः कवयित्रा। माधवेन्द्रदेवोऽपि न केवलं कविश्रेष्ठमिव, अपि तु पूज्यं पितामहमिव प्रेक्षते स्म कलानिधिमहोदयमिमम् । किन्तु स्वल्पायामप्युपेक्षायामुपालब्धुमपि नायं विस्मरति स्म, यत्—"अहं भारतमात्रे माननीयेन तव पित्रा सर्वदा सर्वभावेन संमानितोऽस्मि। अहमपि च तव यशोविस्तारणे न स्वल्पमपि प्रमाद्यामि ततश्च न त्वयाऽयं जनो जातुचिदपि विस्मरणीयः" । यथा—

"श्रीमद्राजाधिराजप्रविदितजयसिंहाख्यभूपालवर्यैः
प्रत्यग्रोदग्रदानप्रकरकलनया पालितो लालितोऽस्मि ।
सोहं श्रीमाधवत्माधव जयसिंहाख्यभूपालसूनो !
विस्मर्तुं नार्हसि त्वं त्वदुदयविजयाशीर्यशोगानशाली ।।१०६।।

नानानरेन्द्राणां संमानमनुभूतवान्, नानादेशेषु नानाप्रकृतिकैर्जनैः सह संव्यवहारमासादितवान्, कलानिधिमहोदयः प्राचीनार्योचितया चर्यया वभूव किल भूयो विनीत

एव । किन्तु सर्वशास्त्रनिष्णाते, प्रकृत्या निःस्पृहे चाप्यस्मिन् समये समये जागर्ति स्म सुप्रशस्योऽयमात्माभिमानो येनाऽस्मिन् देशे समुपागतः सोयं स्वस्याऽसाधारणबुद्धिमत्तां जातीयं गौरवं च जातु प्रकाशयामासैव, यथा—

"भृशं खलु दरिद्रतोऽप्यतिशयेन संतोषिणः
स्फुरद्विपुलबुद्धयोऽप्यभिधनि प्रसङ्गोदिताः ।
कदाचिदसुहानितोऽप्यतिभया यशःकामुका
वयं हृदि त उज्ज्वला दधति येन्तरादित्यकम् ॥६६"

'येन्तरादि'त्यक्' प्रत्ययं दधति [ 'दक्षिणापश्चात्पुरसस्त्यक्' इति पाणिनीयसूत्रम् ] तथा च दाक्षिणात्या वयमित्यर्थः ।

एवं शृङ्गारविषयिण्योऽपि बहुतराः सूक्तयः समुपलभ्येरन, यासु ग्रन्थकर्त्रा नवीना कल्पना, ·सिकानामनुभवसाक्षिण्यः कतिचित्प्रणयघटनाश्च समुपनिबद्धाः । यथा वयःसन्धेः प्रथमं पद्यम् । मिथः प्रणयघटनापराणि पद्यानि यथा—"तोयप्रक्षेपलीलासित्यादिकानि ३०४, ३०५ इत्यादीनि । प्रसङ्गागता अन्योक्तयोऽपि रुचिराः प्रेक्ष्येरन् काव्यप्रणयिभिः । यथा—३५६, ३५८, 'मधुप विपिने' इत्यादि ३३१ । सत्सङ्गादिभिरनेकैः प्रबलोपायैरपि निसर्गजो दुर्गुणो न किल दूरीभवति दुष्ट—दुर्हृदामिति मधुरतरमाह मुक्तावली यथा—

"पाटीरद्रुमसङ्गिनः सुरभितासंपद्भृता मारुताः
सौरभ्यैरिह वबुरे परमपाकुर्वन्तु दुर्गन्धताम् ।
किन्त्वेतस्य मदोत्पतन्मधुकरीपक्षच्छिदः संतपत्—
सूचीतीक्ष्णकठोरकण्टकगणाः केनापनेया भुवि ॥३६०"

किं बहुना निवेदनेन । साहित्यसारसंग्राहिणः सहृदया मुक्तावलीमिमामवलोकयेरन्नेव निर्भरम् । अत्र हि पदे पदे प्राप्यमाणाः कामधेनु-पुष्पबन्धादयश्चित्रबन्धा न किलोद्धारचित्रादिप्रदानद्वारा सरलीकर्तुमशक्यन्त । प्राचीनपत्रेषु तदुद्धाराभावात्, सरभसं मुद्र्यमाणतया तत्प्रयत्नार्थं समयाऽलाभाच्च । किन्तु प्राचीनतमस्य कवेर्माऽस्तु सूक्तीनामकाण्ड एव विलोप इति बुद्ध्या यथाविलब्धा एव तदेते 'बन्ध' प्रबन्धाः पुस्तकेस्मिन् प्रकाश्यन्ते । स्वल्पाकारेषु पत्रेषु शीघ्रतया तावदङ्कितानि तानीमानि पद्यानि । लेखकोऽपि—कामं भाषा-काव्यवेदी भवेत् किन्तु संस्कृतविषये न तावन्मार्मिकः । अतएव बहुषु स्थलेषु अक्षरविनिर्णये समुपस्थितो भूद् भूयान संदेह एव । किन्तु द्वितीयप्रतिरूपकाभावदशायां, कस्यचित्कवेरा-

कस्मिकं प्रतिभाविजृम्भितं कया वा विधया संशोध्यतां मादृशेन मन्दप्रतिभेन ? तद् यादृक्तादृगिदं साहित्यसंघटनं समुपस्थापितं सरससूक्तिसुधासंग्राहिणां सहृदयानां सेवायामिति कृतं बहुना प्रजल्पनेन ।

'गुणगुम्फनिका'युक्ता मुक्तावलिरियं विदाम् ।
साहित्योल्लाससदये हृदये राजतां चिरम् ॥१॥"
एवं विवेकिविद्वत्सु विनयाद् विनिवेद्यते ।
देवर्ष्युपाह्व भट्टश्रीमथुरानाथशास्त्रिणा ॥२॥

मञ्जु—निकुञ्जः
जयपुरम् ।
११।२।५८



॥ श्रीः ॥

तैलङ्गकुलजलधिकौस्तुभदेवर्षिश्रीकृष्णभट्टकविकलानिधिगुम्फिता

# पद्यमुक्तावली

हारोद्द्योतिचिरत्नरत्नकिरणोच्छूनेव वक्षःस्थली
चञ्चच्चञ्चुचकोरशावकचमत्कारस्पृशी चक्षुषी ।
अन्तर्हासविलासलालसकलालोलौ कपोलौ च ते
मध्यं चारुचतुष्पथस्थितमिव द्रव्यं शनैर्लीयते ॥१॥

रत्नहारे उत् उच्चैःद्योतीनि ( प्रकाशमानानि ) यानि चिरत्नानि (प्राचीनानि 'वहुमूल्यानि' ) रत्नानि, तेषां किरणैः उच्छूना मांसला–प्रफुल्ला इव सेयं वक्षःस्थली ( अस्ति ) । वक्षस्थल्यां यौवनोद्गमेनैव न केवलं मांसलता अपि तु हाररत्नकिरणानामेकत्र समागमात्सेयं प्रफुल्लतेति आलंकारिकी उक्तिः । चञ्चच्चक्षुः ( चपलनेत्रः ) यः चकोरशिशुः, तस्य चमत्कारधारिणी ते नेत्रे । नेत्रयोरपि क्रमिकी शोभाविवृद्धिरित्याशयः । अन्तः अभ्यन्तरे ( गुप्तम्, मन्दमित्याशयः ) हासः ययोस्तौ, विलासलालसौ ( क्रीडायामुत्कण्ठितौ ), अतएव कलालोलौ यौवनानुगुणचातुर्यसूचकौ च ते कपोलौ स्तः । अर्थात् प्रसन्नतया हास्यमन्तर्गोपायन्तौ, अतएव मांसलौ ते कपोलौ अपि उपचितौ स्तः । किन्तु नगरचतुष्पथे स्थितं किञ्चिद् द्रव्यं शनैः शनैर्यथा हीयते न्यूनं भवति ( जनैरपह्रियते ) तथा ते मध्यं ( कटिः ) क्षीयते । सर्वशरीरे उपचयः किन्तु कटिदेशे तनुता ते भवतीति अज्ञातयौवनाया वयःसन्धिः ॥१॥

अन्तःसारनिरूपणोत्सुकमनाः पाणिद्वयेन स्पृश–
त्येकान्ते कुतुकेन संकलयते दोर्भ्यां पिधत्ते पुनः ।
वारंवारमुदारहारमहसामालोकनस्य च्छला–
दुद्गच्छत्स्मितचारुचन्द्रवदना वक्षःस्थलं वीक्षते ॥२॥

'उच्छूनयोरनयोर्मध्ये किञ्चिद् दृढताकारणम् ( अस्थ्यादिकम् ) अस्ति न वा' इति निश्चयाय उत्कण्ठिता हस्ताभ्यां स्पृशति । एकान्तं वीक्ष्य नवोद्भिन्नत्वादन्तः स्फुरन्तौ

कुचौ निजबाहुभ्यां संकलयते निष्पीडयति, पुनः शीघ्रम् आच्छादयति। हारस्य महसां प्रकाशकिरणानां दर्शनमिषेण, उद्गच्छता (तत्कालं निःसरता) मन्दहास्येन सुन्दरं चन्द्रवद् वदनं यस्या ईदृशी (सा बाला) वक्षःस्थलं मुहुर्वीक्षते, । यथा विहारी–"भावक उभरौंहों भयो कछुक पर्‌यो भरुआय। सीपहरा के मिस हियौ निसदिन निरखत जाय ॥" ॥२॥

राधे ! हन्त वसन्त एष समयो मा देहि मानं मना–
गेतं चेतसि पश्य पश्य चरणद्वन्द्वानतं माधवम् ।
द्रागुत्थापय कान्तमान्तरममुं तापं समुत्सारय
प्रेमस्रोतसि मज्ज हेममणिना नीलीव संगच्छताम् ॥३॥

एतं मानम् (अभिमानम्) चित्ते ईषदपि मा स्थापय। चरणयुगपतितं श्रीकृष्णं पश्य। कान्तं सान्त्वनापुरस्सरम् द्राक् शीघ्रम् उत्थापय। अस्य कान्तस्य, तव वा आन्तरं हृदयस्थितं तापं (विरहजन्यं संतापं) दूरीकुरु। प्रेमप्रवाहे निमज्ज। कथं प्रणयाऽऽ-प्लुततां दर्शयेयमित्याहः–"सुवर्णेन यथा नीली (इन्द्रनीलमणिः) तथा स्वर्णवर्णया त्वया श्यामवर्णो माधवः संमिलतु।" मानं विसृज्य शीघ्रं माधवमालिङ्गेत्याशयः ॥३॥

स किं मित्रं योऽस्मिन् जगति कुरुते शर्म सुहृदः
परिज्ञाप्य प्राज्ञः, सुहृदपि स किं यो निजरुजम् ।
न मित्राय प्रज्ञापयति सुतरां दैवशरणः
तयोरेतत्तत्त्वं किमपि खलु तावेव भजतः ॥४॥

सः किं मित्रं यः प्राज्ञः परिज्ञाप्य मुहुः संसूच्य सुहृदः (मित्रस्य) शर्म सुखं कुरुते। मित्रोपरि कृतम् उपकारभारं मुहुः संज्ञाप्य मित्रस्य हितकरणं मित्रस्य शोभावहं नास्तीति तात्पर्यम्। सः सुहृदपि कीदृक् यः निजरुजं निजां पीडां मित्राय न प्रज्ञापयति सूचयति। अपितु दैवं शरणं करोति। एवंविधयोः द्वयोर्मित्रयोः किमपि (अनिर्वचनीयम्) एतत् रहस्यं तौ एव सुहृदौ एव भजतः स्वहृदये जानीतः ॥४॥

भालोद्भासितभूरिभाग्यभवनो भूयःप्रभावान् भवान्
भावैर्भावयते भवेऽत्र भविकं भावे यशोलोभवान् ।
मादृग्वाकवराकवाकजवराकच्छिद्रराकल्पकः
सत्यं नाम सुधाकरोऽस्ति वसुधासंपत्सुधावर्षणः ॥५॥

भाले ललाटे प्रकाशितं वहुतरं भाग्यस्य शुभादृष्टस्य भवनं (सत्ता) यस्य सः। भूयः( अतिशयित )प्रभा( कान्ति )वान् भवान् अत्र भवे ( संसारे ) भावैः सर्व-प्रकारैः भविकं कल्याणं भावयते विचारयति। कथमेतत् ? यतः भावे प्रत्येकभावे भवान् यशसो लोभवान्। भवान् "प्रत्येकभावेन मह्यं यश एव प्राप्नुयात्" इति कीर्तिलोभवान् अस्ति। अन्यत् अस्पष्टम् ॥ ५ ॥

वराकस्य वराकस्य वरा कस्य कवेः कृतिः।
श्रीकृष्णाख्यवराकस्य वरा कस्य न रोचते ॥६॥

[ उत्पत्ति–ज्ञप्ति–पुष्टि–विपये पद्यमिदम्— ]

वार्तालापे दर्शने स्पर्शने च दृष्ट्वा सद्यस्तत्क्षणे प्रोल्लसन्तीम्।
प्रीतिं सीतारामयोः स्थानतोऽस्मात् सौमित्रेयः कैतवेनाऽपयातः ॥७॥

स्पर्शने नवीनपुष्प–फलादिप्रदानमिषेण अङ्गस्पर्शे। सीता–रामयोः प्रोज्जृम्भमाणां प्रीतिं दृष्ट्वा ( ज्ञात्वा ) अस्मात् स्थानात् कश्चिन् मिषमादाय लक्ष्मणः अपगतः [ उत्पत्ति ज्ञप्ति–पुष्टि–विषये पद्यमिदम्' इति मूलपुस्तकस्य टिप्पणी ] ॥ ६ ॥

बाल्यादेवाऽनुपाल्या समधिकरतितः सैव राधाऽस्मि, सोयं
कृष्णः केलीसतृष्णः, सुरभिसमयजा सैव सामग्र्यभीक्ष्णम्।
किं त्वन्योन्यात्तहर्षाधिकसमुदयिनी कापि तर्षाप्रकर्षात्
कालिन्दीकूलकुञ्जे प्रतिपदविहृतिर्मानसान्नाऽपयाति ॥८॥

[ अस्फुटालंकार–रस–प्राधान्योदाहृतिः ]

बाल्यकालादेव अनुपाल्या रक्षणीयाऽनुरोधा। सुरभिवसन्तसमयोद्भवा नित्यम् उपलभ्यमाना लता–कुञ्जादिका सैव उद्दीपनसामग्री। अन्योन्यम् आत्तः स्वीकृतः यो हर्षः तेन अधिकं यथा तथा उदयमागता। उभयोर्हर्षपूर्वकं प्रवृद्धा, इत्याशयः। तर्षस्य तृष्णायाः ( उत्कण्ठायाः ) अप्रकर्षात् अदूर(सर्वदावर्तमान)तया, अथवा आ–समन्तात् प्रकर्षात् आधिक्यात्। कालिन्दीतटकुञ्जे प्रतिपदं यो विहारः स मानसान्न दूरे भवति, स कुञ्जविहारो न विस्मृतो भवतीत्यर्थः। उपभुक्तत्वरूपकारणसत्तायामपि अनुत्कण्ठा-रूपकार्यस्यानुदयाद् विशेषोक्तिः। अथवा अनुपभुक्तत्वरूपकारणस्याऽभावेपि उत्कण्ठा-रूपकार्यस्योत्पत्तिरिति विना कारणं कार्योत्पत्तिरूपविभावनालङ्कारस्य सत्तेति अस्फुटा-

लङ्कारः । उत्कण्ठादिभिर्व्यभिचारिभिः परिपुष्टाया दम्पत्योः रतेः परिव्यञ्जनेति शृङ्गाररस एवात्र प्रधानम् । यः कौमार, इति काव्यप्रकाशीयोदाहरणवत् ] ॥ ८ ॥

महत्यां लीलायां सरसरतिशीला व्रजवधू-
जनाः स्वं स्वं गेहं समुपगतवन्तः किल ततः ।
रहःकुञ्जे गुञ्जन्मधुपपिकपुञ्जेरितरवे
स्थितौ राधाकृष्णौ समुपचिततृष्णौ विलसतः ॥९॥

लीलायां समाप्तायां क्रीडाशीलाः व्रजवधूलोकाः स्वस्वगृहं गताः । अथवा लीलाया महत्वात् अतिविस्तारात् गोपीजनाः सर्वे स्वगृहं गताः । इदानीम् एकान्तकुञ्ज गुञ्जद्भिः मधुपैः पिकपुञ्जैश्च ईरितरवे उद्भावितकोलाहले [ पक्षिणां निःशङ्ककोलाहलात् स्थानस्य विविक्तत्वं ध्वन्यते]। उद्दीपकेऽस्मिन् कुञ्जे वहोः कालात् प्रवृद्धतृष्णौ (प्रबलोत्कण्ठौ) राधाकृष्णौ विहारं कुरुतः ॥ ९ ॥

चक्षुश्चारुचकोरचाटवचमत्कारावहा चन्द्रिका
चैवोदञ्चितचन्द्ररोचिरुचिता पीयूषधाराधरा (री) ।
चित्तं चन्दनलेपमोदनकरी मानोरथीः संपदोऽ-
तिक्रान्ता प्रतिभाति कापि सखि मे कान्ता पुरोगोचरः ॥१०॥

चक्षुः ( नेत्र ) रूपचकोराणां चञ्चलतायाः चमत्कारस्य च कारिणी। उदञ्चितस्य चन्द्ररोचिषः ( प्रकाशस्य ) उचिता । उज्जृम्भमाणचन्द्रप्रकाशे समुचिता । अतएव पीयूष-धारायाः धारिणी चन्द्रिका [ सर्वतो व्याप्तास्तीति उद्दीपनसामग्री सूच्यते ] । मानोरथीः ( मनोभिलाषतः कल्पिताः ) संपदः नाना आनन्दान् अतिक्रान्ता । यथेच्छं मनसा अभ्यूहितान् आनन्दानपि अतीता । अतएव स्मरणे कृते एव चित्ते चन्दनलेपवत् आनन्दनकरी कापि ( अनिर्वचनीया ) कान्ता प्रेयसी मे पुरो गोचर इव भाति । कान्ता पुरोगोचरः, इति गोचरशब्दस्य नित्यपुंस्त्वात् अन्वयः । गोचरा इति पाठे तु यथा तथा ॥ १० ॥

अद्याऽहं चपलाऽऽयतेक्षणपतत्पीयूषधारामुचा
दैवादेव वियोगमेनमगमं सौन्दर्यसारश्रिया ।
प्राप्तोऽद्यैव च पुष्परेणुनिकरैराशाः समाच्छादयन्
श्रीखण्डानिलमत्तवारणबलैः कन्दर्पभूमीपतिः ॥११॥

दैवात् अद्य, चपलाभ्याम् आयताभ्याम् ( दीर्घाभ्याम् ) च नेत्राभ्यां पतन्ती प्रवहन्ती या अमृतधारा तस्याः प्रवाहिण्याः [ अमृताप्लावकनेत्रराजितया इत्याशयः ] सौन्दर्यसारस्य लक्ष्म्या ( प्रेयस्या नायिकया ) अद्य वियोगं प्राप्नुवम् । अद्यैव च पुष्पपरागपुञ्जैः सर्वाः आशाः ( दिशः ) व्याप्नुवन्, श्रीखण्डस्य ( चन्दनस्य ) तत्सुगन्धवाहिन इत्यर्थः ।, ये अनिलाः पवनाः ते एव मत्तवारणानां बलानि ( सैन्यानि ) तैः सह कन्दर्परूपो भूपः समायातः । अद्यैव मे प्रेयस्या विरहः, अद्यैव च मलयानिलाद्युद्दीपकसामग्रीसहितः कामदेवभूपः समागत इत्याशयः ॥११॥

**सुधाकर ! मुधा करप्रकरमत्र भूमण्डले**
**प्रसारयसि, विष्टपं प्रमुदितं किमेतावता ? ।**
**अयं तु विहगो रटन् सरिदवारगः पारग–**
**प्रियाविरहजव्यथाविधुरचित्त उत्ताम्यति ॥ १२ ॥**

हे सुधाकर ! अत्र ( अस्मिन् ) भूमण्डले निजं करप्रकरम् ( किरणसमूहम् ) व्यर्थं प्रसारयसि, एतावता किरणजालप्रसारणेन किं सकलं विष्टपं भुवनं प्रमुदितम् ? अपितु न प्रमुदितम् । यतो हि सरितः ( नद्याः ) अवारगः एतत्तीरगतः अतएव वैकल्येन रटन् विहगः चक्रवाकः ( चातको वा ) नद्याः पारगतायाः प्रियाया विरहजनितया व्यथया विकलचित्तः सन् उत्ताम्यति खिद्यते । गर्वेण सर्वान् प्रति अवहेलां दर्शयन्तं धनिकं राजादिकं प्रति खिन्नस्य तदनुजीविनोऽन्योक्तिः । चन्द्रं प्रति वियोगिन उपालम्भस्तु वाच्य एव ॥१२॥

**ननु व्यरचि सा वधूरिह सुमेधसा वेधसा**
**वशीकरणवस्तुभिस्तुहिनदीधितिक्षालितैः ।**
**विलोचनसुखावहाऽवयवशालिनी यन्मनो**
**जहार, हृदि संगता सकलमङ्गतापं च मे ॥ १३ ॥**

बुद्धिशालिना विधिना वशीकरणस्य वस्तुभिः चम्पककमल–कनकादिभिः । वस्तुभिः व्यरचि निर्मिता । तान्यपि वस्तूनि चन्द्रेण क्षालितानि नितान्तं सुन्दराणि आकर्षकोज्ज्वलानि सन्ति । यतो हि नेत्रसुखकारकैः अवयवैः शोभमाना सा नेत्राभ्यां दृष्टमात्रैव मनो जहार । मे हृदि आश्लिष्टा च सकलम् अङ्गानां संतापं च जहार । पूर्वं तु विधातैव बुद्धिमान्, ततो निर्माणसाधनान्यपि वशीकारकाणि चन्द्रोज्ज्वलानि

चोपात्तानि । उत्प्रेक्षालङ्कारेण नायिकायाः सौन्दर्यातिशयः, ततोपि शृङ्गारश्चरमो व्यङ्ग्यः ॥१३॥

समुदित–मुदितश्रीवैष्णवाऽऽलोकलीला–
ऽऽलपन–तपनकन्यास्नाननिःपापतापैः ।
प्रकृतिसुकृतिशीलैर्मानवैः सेव्यमाना
मथयति मथुरेयं मान्मथं हृद्विकारम् ॥ १४ ॥

समुदिताः मन्दिरादिषु एकत्रभूताः, प्रसन्नाश्च ये श्रीवैष्णवाः तेषाम् दर्शनम्, लीला ( प्रमोदः ), तैः सह आलपनं ( आभाषणम् ) एभिः, तथा तपन( सूर्य )कन्यायाः ( यमुनायाः ) स्नानेन च दूरीभूताः पापानि तापाश्च येषां तादृशैः । प्रकृत्या स्वभावेनैव पुण्यकार्यशीलैः मानवैः । मथुरा कामदेवसंवन्धि–हृदयविकारं नाशयति ॥१४॥

उपनतजनतादृङ्माधुरीमाधुरीणां
सुरभयति सुवृन्दारण्यगा माधुरी याम् ।
प्रतिपदमथ यस्या माधुरी शस्यकीर्तिं–
र्हरिजनमिलनानि प्रातु सा माधुरी भूः ॥ १५ ॥ ❀
'प्रतिपदसुखदा सा'

व्याख्या—उपनता प्राप्ता जनानाम् (स्वमध्ये निवासिनां लोकानाम्) तादृशी माधुरीमा ( माधुर्यलक्ष्मीः ) तादृशमाधुर्यसंपत्त्या धुरीणां सर्वपुरीणामग्रभागे स्थितां याम् ( माथुर-भूमिम् ) वृन्दावनगता माधुरी ( मधुरता, शोभा ) सुरभयति मनोज्ञां करोति [ सुरभिः स्यान्मनोज्ञेपीति विश्वः ]। प्रतिपदं यस्याः माथुरभूम्याः माधुरी ( मधुरता ), सर्वतः प्रशंसनीयकीर्तिरस्ति, सा माधुरी माथुरी ( मथुरासंवन्धिनी ) भूः हरिभक्तैः सह मिलनानि प्रातु पूरयतु [ 'प्रा' पूरणेऽदादिः ]। 'उपवनपवनौघा )० इत्यादि पाठान्तर तु स्पष्टमेव ॥१५॥

का मधुरा वत नगरी कामधुराधरणधीरधौरेयी ।
गलितकलंकामधुरा कामधुराशां जनायतो न फलवतीं ॥१६॥

---

❀ उपवनपवनौघानीतसौरभ्यभारै–
र्हरिवसतिकरी सा माधुरी त्रायतां भूः ॥ [ पाठान्तरम् ]

सुप्रासस्था सदैव त्वमुदयविधिजे शुद्धभावाऽवदाता
सुस्थानस्थामदा त्रिप्रसरण सरसा मारसारावरावा ।
विख्यातज्ञानगम्य प्रकरणरुचिरा भासिता भासिताभा
सुप्रत्यक्षा भवास्य स्वरसवति सदा भावभावानुभावा ॥१७॥ [ कामधेनुबन्धः ]

सिन्दूराऽरुणरागराजितघनश्रेणीमनोहारिणि
श्रीमन्मन्मथभूमिपालशिविरस्तोमानुकारक्षमे ।
पश्य व्योम्नि विभान्ति संप्रति तिरोभूते प्रतीच्या दिशो
भानौ व्यायतवल्गुभूरितनिकातौल्येन सान्ध्यांऽशवः ॥१८॥

सिन्दूरवत् अरुणवर्णेन राजितया घनश्रेण्या ( मेघपङ्क्त्या ) मनोहरे । मन्मथरूपभूपस्य शिविरसमूहानुकरणयोग्ये [ अर्थात् व्योम नास्ति कामदेव–भूपालस्य शिविरम् अस्ति ] ईदृशे व्योम्नि ( आकाशे ) प्रतीच्याः पश्चिमायाः दिशः सकाशात् ( पञ्चमी ), भानौ तिरोभूते सति सान्ध्याः सन्ध्याकालिका अरुणवर्णाः सूर्यस्य अंशवः किरणाः, व्यायताः अतिदीर्घाः, वल्गवः मनोहराः भूरयः ( बहवः ) याः तनिकाः ( बन्धनरज्जवः 'तनी' इति हिन्दी ) तासां तौल्येन सदृशतया भान्ति । भानौ अस्तं गते, अरुणवर्णाः दीर्घाः सूर्यकिरणाः अरुणवर्णस्य व्योमरूपकामशिविरसमूहस्य (सैन्यसंनिवेश-पटमण्डपस्य) 'तनिकाः' बन्धनरज्जवः इव भान्ति, इत्याशयः ॥१८॥

श्रीमन्माधवसिंह ! भूमिवलयप्रोद्य( द्यत् )प्रदीप त्वया
जम्बूद्वीपमुदञ्चितेन महसा द्राङ् निस्तमस्कं कृतम् ।
किञ्चाऽमित्रपतङ्गकाः प्रतिपदं दग्धाः, विदग्धाऽवली–
नानार्थप्रतिपत्तिसाधन चिरं जीव द्विजाशीर्गणैः ॥ १९ ॥

भूमिवलये प्रोद्यता (उद्गतेन) प्रदीपेन सदृश हे माधवसिंह भूप ! त्वया उदञ्चितेन उच्चैःप्रसृतेन महसा निजतेजसा इदं जम्बूद्वीपं तमःशून्यं कृतम् । प्रतिपदम् अमित्र(शत्रु)रूपाः पतङ्गकाः (शलभाः) दग्धाः । अतएव विदग्धावल्याः चतुरजनसमूहस्य नानाप्रयोजनप्राप्तिसाधनभूत हे राजन् त्वं द्विजानामाशीःसमूहैः चिरं जीव ॥१९॥

अन्येषां चन्दनत्वं कलयति मलयः प्रोन्मिलच्चन्दनद्रोः
सङ्गादङ्गाऽऽर्तिभङ्गाय च भवति मरुन्मार्जनात्स्वेदवारः ।

माहात्म्यं मोदराशिः कलिकलुषसमाक्षालनं चापि साक्षाद्
युष्मत्संबन्धतो मे धरणिसुरतरो ! भाति किं तत्र चित्रम् ॥२०॥

मलयः मलयपर्वतः प्रोन्मिलतः चन्दनद्रोः चन्दनवृक्षस्य सङ्गात् अन्येषामपि वृक्षाणां चन्दनत्वं करोति । तथा मलयस्य मरुत् पवनः स्वेदवारः ( स्वेदजलस्य ) मार्जनात् अङ्गानाम् आर्तिभङ्गाय पीडानाशनाय प्रभवति । किन्तु हे धरणेः ( पृथिव्याः ) सुरतरो कल्पवृक्ष ! युष्मत्सम्बन्धमात्रादेव मम सर्वत्र माहात्म्यम् ( प्रभावविशेषः ), मोदराशिः आनन्दसमूहः, कलिजनितपातकप्रक्षालनं च चेद्भाति तत्र किमाश्चर्यम् । मलयश्चन्दनसंपर्कादन्यमपि चन्दनं करोति, भवतः साक्षात् सम्बन्धान् मम तु माहात्म्यादि चेद्भवति तत्र किमाश्चर्यमित्याशयः । पूज्यतमं गोस्वामि—धर्माचार्यं प्रति प्ररोचना ॥२०॥

पश्चाल्लग्नपरागपुञ्जमलिनैः पुष्पावचायक्षणे
वक्षोलम्बितचूर्णकुन्तलवलन्मायूरपक्षप्रभैः ।
खेदस्वेदविभेदबद्धवसनप्रव्यक्तमुक्तागुणै-
रङ्गैरेव वनान्तरा विहरणं व्यक्तीकृतं वाग्मिनः ॥ २१ ॥

[ अत्र वाग्मिपदेन प्राधान्येन न त्वं वनान्तरा विजहार ( जहर्थ ), अपितु सोल्लासवसन्तागमोद्दीपितमदनः परविलासवतीभिररंसीरिति व्यज्यते । तत्र वाग्मिपदस्यैव प्राधान्येन व्यञ्जकत्वम् । इतरेषामङ्गविशेषणानां वनविहारसाधारण्येऽपि ततो व्यावर्त्य तस्यैव कविसंरम्भगोचरत्वेन विवक्षितसुरतरूपार्थोपपादकत्वात् । तथाहि—वाग्मित्वं नाम वाचोयुक्तिपटुत्वम् । 'वाचोयुक्तिपटुर्वाग्मीति' कोषात् । तत्र द्वेधापि संभवति । सत्यार्थवाचोयोजनपटुतया, असत्यार्थवाचोयोजनपटुतया च । तत्र प्रकृतेऽन्यत्र सुरतं कृत्वा समागतो नायकः स्वयं मृषा संकेतोपारिकया कृतोत्कलिकया नितरां कामशरनिपीडितया कयापि नायिकया लक्षितः सोपालम्भमुक्तोऽपि यदा सुरतं नाङ्गीकरोति 'वनविहारार्थमेव गतोस्मि' इति वदति, तदा सा साकूतं सखीमवादीत् 'असत्यमयं वदति, परं वाचोयुक्तिपटुतया 'मिथ्या वदसीति' केन वक्तुं शक्यः ? यस्याऽङ्गान्येव तद्विशेषणाविष्टानि वनविहारं प्रकटीकुर्वन्ति । तथा सति सत्यार्थवाचोयोजनपटुत्वमेव स्यात् । तत्तु न सम्भवति । यतो वनविहारे पश्चादङ्गप्रदेशे परागसम्बन्धाऽसम्भवात् । यथा कथंचित् संभवेऽपि तैरङ्गमालिन्याऽसंभवात् । तेन 'नेदं पश्चादङ्गप्रदेशे परागकृतं धूसरत्वम् , किन्तु सुरतं कृत्वाऽप्यतृप्तेनामुना विपरीतमाचरितमिति भूरजःसम्बन्धेन धूसरत्वमिति व्यज्यते । किञ्च वनविहारे अधो विनम्रस्य पुष्पावचायात् चूर्णकुन्तलानां वक्षोलम्बितताऽस्तु, परतु तैः सह

उष्णीषावनद्धानां मयूरपक्षाणां संवलनाऽसंभवात् इदमस्तव्यस्ततया मस्तकन्यस्त–स्रस्तचूर्णकुन्तलानां मयूरपक्षाणां च संवलनं कामोन्माद–सजव–सुरतावेशकृतमेवेति व्यज्यते। किञ्च–वनविहारं तस्यैच्छिककतया खेदो न संभवति, यथाकथंचित्सुंभवेऽपि तज्जन्यस्वेदेनाङ्गसंलग्ने वसने मुक्ताहारस्य प्राकट्यं स्यात्। अत्र तु गुणपदात् त्रुटितो मुक्ताहार इति लक्ष्यते। इदं च सावेगसुरताऽऽवेशकृतपरस्परालिङ्गन–संमर्दन–जन्यमेव मुक्ताहारस्य त्रुटितत्वमिति व्यज्यते। इदं च वाग्मिपदेन सुरते व्यञ्जिते सति सर्वेषां विशेषणानां तदानुकूल्येन सुरतरूपैकार्थव्यञ्जकत्वमिति वाच्यार्थतादशायां वाग्मित्वस्य इतरविशेषणानां च वनविहारपर्यवसायित्वेनैव स्थितिः। व्यङ्ग्यार्थतादशायां तु वाग्मित्वम् इतरविशेषणानि च सुरतपर्यवसायीनीति वाच्यार्थापेक्षया व्यङ्ग्यार्थस्य अतिशयचमत्कार-कारित्वमिति ध्वनिलक्षणादिदमुत्तमध्वनिकाव्योदाहरणं ज्ञातव्यम् ] ग्रन्थकृतट्टिप्पणी ॥२१॥

वस्तुना व्यतिरेकालंकारध्वनिः पुष्पावचयनस्य समये अङ्गानां पश्चाद्भागे लग्नैः पुष्पपरागपुञ्जैः ( करणभूतैः )-मलिनीकृतैः, वक्षसि विलम्बिताः ये चूर्णकुन्तलाः ( बन्ध-नाद् वहिर्भूताः ( अग्रतना लघुकेशाः ) तेषु वलतां (संमिलताम्) मायूराणां पक्षाणां प्रभा येषु तादृशैः, तथा खेदजनितप्रस्वेदेन यो हि संमदस्तेन संश्लिष्टे–वसने प्रव्यक्ताः प्रतिच्छन्दिता मुक्तागुणाः येषामीदृशैः, वाग्मिनः ( वचनपटोः ) अङ्गैरेव वनमध्ये विहरणं व्यक्तीकृतम्। श्रीकृष्णः संकेतागतां गोपीं विहाय अन्यया सह विहारं कृतवान्। संकेतिन्या गोप्या 'कुत्र गतोऽभूः' इति पृष्टे तु पुष्पावचयार्थं वनविहाराय गतोऽभूवम् इति साधितवान्। तस्य प्रत्युत्तरे गोप्या प्रोच्यते साकूतम्–'अवश्यं वनान्तरे विहरणं भवदङ्गैरेव सूचितम्। वने विहरणे पुष्पपरागेण अङ्गानामग्रभागे मालिन्यं स्यात् तथा नारीचूर्णकुन्तलैः सह भव-द्धारितमयूरपक्षाणां शोभा, एवम्–प्रस्विन्नेषु अङ्गेषु मुक्तास्रजामपि प्रतिफलनं ( गाढाश्लेषेण यथावत्प्रतिफलनम् 'उपड आना' ) दृश्यते। ततश्च एभिरङ्गैरेव वनविहरणं व्यक्तीकृतम् ? अर्थात् वनविहारस्य मिषं कृत्वा सुरतविहाराय भवान् गतः। इति वाक्पटोस्ते अङ्गैरेव सूचितमिदम्। ग्रन्थकारकृतटिप्पण्यामपि सोयमर्थः प्रकटीकृतः। निःशेषच्युतचन्दन-मित्यादिवदत्रापि व्यङ्ग्यसंगूहनमिति मार्मिकेभ्यः किं वा वक्तव्येन ॥२१॥

सुधासङ्गै रङ्गै रखिलजनसंतापसरणीं
तृणीकुर्वन्नानाननयननिर्माणनिपुणः।
अपि ध्यानाऽऽधानात्कलिगरलमूर्च्छामपनयन्
द्रवो, देवी गङ्गा मम दुरितभङ्गाय भवतु ॥ २२ ॥

सा देवी गङ्गा मम दुरितभङ्गाय भवतु यस्या गङ्गाया द्रवः ( जलप्रवाहरूपः ) देवः सुधामिलितैः निर्जरङ्गैः सम्पूर्णजनानां सर्वविधसंतापप्रसरणं तृणीकुर्वन् ( तृणवत् अपनयन् नाशयन् ), तथा नाना आननानां मुखानां नयनानां च निर्माणे निपुणः। अर्थात् एकमुखस्य स्थाने चतुर्णां पञ्चानां वा मुखानाम्—तथा द्वयोर्नयनयोः परिवर्तो त्रयाणाम्, अष्टानां सहस्राणां वा नयनानां निर्माणे निपुणः [ ब्रह्माणं, स्कन्दं, शिवं, ब्रह्माणं इन्द्रादिकं वा जनं संपादयतीत्याशयः ]। यस्या ध्यानयोजनात् कलिकालसंबन्धिना विषेण जनितां मूर्च्छा दूरीकुर्वन् ( द्रवः ) ॥२२॥

भुजङ्गव्यासङ्गाज्जनितमुदधेरेतदमरै—
नयेदन्तं जन्तूनिति धृतविषः कुत्र गिरिशः।
न चेन्मातर्भूयाः प्रविचलदसूया स्मररिपोः
शिरोमालाहालाहलहरणसत्कार्मणकरी ॥ २३ ॥

भुजङ्गस्य आकर्षणरज्जूकृतस्य वासुकेः सङ्गात् अमरैः जलधेः समुद्रसकाशात् जनितम् एतद् ( विषम् ) जन्तून् प्राणिनः अन्तंनयेत् समापयेत् इति रक्षाबुद्ध्या गिरिशः कण्ठे धृतगरलः अभूत् स विषधारणकरः शंकरः कुत्र तिष्ठेत् यदि हे मातर्गङ्गे त्वं स्मररिपोः ( शिवस्य ) विषस्य हरणे सत् कार्मणम् अभिचारकृत्या( जादू )रूपं कर्म करोति तादृशी शिरसि धृता मालास्वरूपा, पार्वत्याः असूयामपि प्रविषह्य त्वं यदि शिरोमाला न भूयास्तर्हि गिरिशः कुत्र ( कुत्र तिष्ठेत् )। विषहरणे कार्मणकारिणी शिरोमण्डनमाला भूत्वा त्वयैव गिरिशो रक्षित इत्यर्थः। भूयाः इत्याशिष्यम्। अतएव लिङ् न ॥२३॥

द्रुतः किं कैलासः स्मरहरतपस्तापिततनु—
र्मुनेर्जह्नोः किं वा जलधिजठराऽऽलम्बि सुयशः।
सुधाधारां किं वा किरति बलिसद्मन्यमरराड्
दधाना नानात्वं जयति सितमूर्तिः सुरधुनी ॥ २४ ॥

जाह्नव्याः श्वेतां धारां नानाधा सन्देग्धि उत्प्रेक्षते—स्मरहरस्य तप—ऊष्मणा तापितमूर्तिः किं कैलासपर्वतः द्रुतः द्रवरूपं प्राप्तः? अथवा समुद्रमध्यपर्यन्तगामि जह्नुमुनेः एतत्सुयशः अस्ति [ गङ्गा हि समुद्रं प्रविशति ] अथवा अमरराट् इन्द्रः ब्रह्मा वा बलिसद्मनि ( पाताले ) सुधाया धारां किरति ? इति नानात्वं दधाना श्वेतमूर्तिः सुरनदी जयति ॥२४॥

समाना नानानां दुरधिगमनानाऽऽगमविदां
ददाना नानायैर्नवनिधिविलासैरतिमुदम् ।
पुनाना पापानप्यवकलिततापानुरुगदै-
र्जनानामार्तानामिह जयति गङ्गैव शरणम् ॥ २५ ॥

दुरधिगमान् दुर्बोधान् नाना आगमान् ( शास्त्राणि ) विदन्ति तादृशानां समाना । नाना आयः धनागमो येषां द्वारा तादृशैः नवसंख्याकनिधीनां विलासैः अतिप्रमोदं ददती । अवकलित( अनुभूत )तापान् पापान् ( पापकारिणः ) अपि जनान् पुनाना पवित्रयन्ती । उरुगदैः महद्भिः रोगैः आर्तानां जनानां कृते इह गङ्गैव शरणं रक्षास्थानम् ॥२५॥

धृतस्रोतःस्वाना शशिकरसमानाच्छलहरी-
परीता निर्णीता निगमपथगीताऽमितगुणा ।
सुधासारोत्सङ्गा त्रिपुरहरसङ्गातिसुखदा
गुणोत्तुङ्गा गङ्गा सुखयतु मदङ्गानि नितराम् ॥ २६ ॥ सततम्

धृतः स्रोतसां जलप्रवाहाणां स्वानः रवः यया सा । चन्द्रकिरणसमानाभिः स्वच्छश्वेताभिः लहरीभिः परीता व्याप्ता । वेदमार्गगीताः अमिताः अपरिमिताः गुणा यस्या इति निर्णीता सर्वैर्निश्चिता । सुधायाः सारः दृढभागः उत्सङ्गे ( मध्ये ) यस्याः सुधातोऽपि श्रेष्ठगुणा । शिवस्य सङ्गेन अतिसुखदा, गुणैः सर्वतः श्रेष्ठा ॥२६॥

सरिज्ज्येष्ठा व्यालव्यतिकरवती भूरिवदनै-
स्त्रिलोक्यां दीव्यन्ती परिकलितताराधिपकला ।
त्रयस्त्रिंशत्कोटित्रिदशवरवन्द्याऽऽदरभरा-
दनङ्गारेरङ्गद्युतिरिव मदङ्गानि सुखयेत् ॥ २७ ॥

सरित्सु प्रभावातिशयात् श्रेष्ठा गङ्गा । व्यालानां सर्पाणां व्यतिकरेण ( संबन्धेन ) युक्ता [ शिवाङ्गकान्तौ गङ्गायां च समानम् ] भूरिमुखैः दीव्यन्ती शोभमाना [ उभयत्र समम् ] धृतचन्द्रकला । आदरातिशयात् सर्वैर्देवैर्वन्द्या ॥२७॥

भृङ्गाभ्यामुल्लसद्भ्याममरधुनिः तटे तावके वप्रपातं
कुर्वन्नन्दी प्रचण्डं स्वपुरत उरगं दष्टुमुद्यन्तमेकम् ।

दृष्ट्वा रुष्टोऽवधीत्तं स तु विधुततनुः शम्भुरह्नाय भूत्वाऽऽ-
रूढस्तस्योपरिष्टाददयत परमः स प्रतापस्त्वदीयः ॥ २८ ॥

उल्लसद्भ्यां तीक्ष्णाग्राभ्यां शृङ्गाभ्यां वप्रपातम् भूमेः उत्खातकेलिं कुर्वन् नन्दी दंशनाय उद्यान्तं एकं सर्पम् अवधीत्। स सर्पस्तु त्यक्तशरीरः सन् शंभुर्भूत्वा तस्योपरि आरूढः, नन्दिनः उपरि अदयत दयामकरोत्, न तु प्रतिहिंसाम्। अतएव हे अमरधुनि ! स त्वदीयः प्रभावः ॥२८॥

दूरादम्वैजयन्ती कलिकलुषघटास्तुङ्गवीचिच्छटाभिः
प्रोत्तुङ्गा वैजयन्ती मधुमथनपुरप्राप्तये प्रस्थितस्य (तानाम्)।
अत्यर्थं वै जयन्ती निजविमलगुणैरापगाः किं च सर्वाः
सद्म द्राग् वैजयन्तीकुरु मम कमलावल्लभाङ्घ्रिप्रसूते ! ॥ २९ ॥

निजाभिः तुङ्गवीचीनां छटाभिः कलिकालस्य पातकघटाः (समूहान्) दूरात् एजयन्ती कम्पयन्ती नाशयन्ती। मधुमथनविष्णुपुरस्य (वैकुण्ठस्य) प्राप्तये प्रस्थितानां लोकानां कृते उच्चा वैजयन्ती (विजयपताका)। निजगुणैः सर्वाः आपगाः (नदीः) वै निश्चयेन जयन्ती। कमलावल्लभस्य लक्ष्मीपतेः अंघ्रिप्रसूते चरणजाते ! मम सद्म वैजयन्तं प्रासादं कुरु। भवत्स्नानात् इन्द्रत्वं मे संपादयेत्याशयः। 'स्यात्प्रासादो वैजयन्तः' इत्यमरः। चतुर्षु चरणेषु 'वैजयन्तीति' चतुःकृत्वो नानाप्रकारेण विन्यासः। यमकादिषु वकारवकारयोरभेदः ॥२९॥

इदं श्रीकृष्णभट्टस्य मुखचन्द्रसुधोपमम्।
अष्टकं सर्वशिष्टानां पापतापमपाक्रियात् ॥ ३० ॥

अमुना यमुनाकूलवटमूलविहारिणा।
हारिणा हरिणा हन्त हेलितं हृदयं मम ॥ ३१ ॥

यमुनाकूले वंशीवटस्य मूलदेशे विहारिणा। मनोहारिणा अमुना हरिणा मम हृदयं वशीकृतम् ॥३१॥

विषयोऽतिशयोत्कर्षी महिमा न हि मादृशाम्।
यदयं हृदयं याति यमुने न मुनेरपि ॥ ३२ ॥

हे यमुने ! त्वत्तीरे भगवदवाप्तिः अयं विषयः अतिउत्कृष्टः ( अगम्यः )। तत्परिज्ञाने मादृशानां महत्त्वं न । यतः अयम् उत्कर्षः मुनेरपि हृदयं न याति, ज्ञान-तपश्चर्यादिभिः संपन्नस्यापि यद्यगम्यस्तर्हि के वयमित्याशयः ॥३२॥

**हरे हृदयमायाहि मायाऽहिरपसर्पतु ।**
**अनेन यदि दंशः स्याद्दंशस्यापि न ते स्मृतिः ॥ ३३ ॥**

हे हरे भगवन् ! मम हृदयं प्राप्नुहि । अनुग्रहेण मम हृदये त्वद्ध्यानादिकमस्तु इति । मायारूपः अहिः सर्पः अपसर्पतु दूरं गच्छतु । अनेन मायारूपेण सर्पेण यदि दंशः ( दंष्ट्रासम्बन्धः ) स्यात्तर्हि ते अंशतोऽपि स्मृतिर्न भवति । मायाच्छन्ने क भगवद्ध्यानम् ? ॥३३॥

**सुरौघवरवन्दनं व्रजवधूवरच्छन्दनं**
**कृताऽसुरनिकन्दनं विरहितापहृच्चन्दनम् ।**
**मनोजमदमन्दनं दृशि सुधौघनिःस्यन्दनं**
**भजे हृदभिनन्दनं पशुपभूपतेर्नन्दनम् ॥ ३४ ॥**

सुरसमूहवरैः वन्दनं प्रणमनं यस्य तम् । व्रजवधूवराणाम् ( श्रेष्ठगोपीनाम् ) छन्दनं संवरणं वशीकारकम् । तापहारकं चन्दनम् । कामदेवमदं मन्दयति ( मन्दं करोति ) तादृशम् हृदयस्य अभिनन्दनम् अभितः आनन्दनम् । गोपभूपालस्य नन्दनं श्रीकृष्णम् ॥३४॥

**प्रमोदभरदायकं सरववंशिकागायकं**
**कलाकुलनिचायकं सकलकामनिश्चायकम् ।**
**शुभावलिविधायकं स्वजनमोक्षणोपायकं**
**श्रयत्कुसुमसायकं भजत भानुजानायकम् ॥ ३५ ॥**

सरवा रवसहिता ( वाद्यमाना ) या वंशिका तया गायकम् । कलासमूहस्य निचायकं संग्राहकम् । सकलकामनानां निश्चायकं निश्चयकर्तारम् । स्वजनानां मोक्षणोपायभूतम् । श्रयन् ( आश्रयन् ) कामदेवो यम् , कामदेवोऽपि यमाश्रयति, कामस्यापि वशीकारकमित्यर्थः । यमुनाप्राणपतिं श्रीकृष्णम् ॥३५॥

**स्फुरत्स्मरविलासकं व्रजवधूजनोल्लासकं**
**कलाकलितलासकं भवरुजां समुज्जासकम् ।**

**विलोचनविलासकं स्वजनवैभवोद्भासकं**
**मुखेन शशिहासकं भजत तारितोपासकम् ॥ ३६ ॥**

स्फुरन्तः प्रकटीभवन्तः स्मरविलासा यस्य, कामविलासैः शोभमानमित्यर्थः । कलाभिः कलितो मण्डितो लासः रासक्रीडा यस्य, यस्य रासक्रीडा नानाविधकलाभिः पूर्णेत्यर्थः । भवरुजां सांसारिकपीडानां नाशकम् । नेत्रयोः विलासकमानन्दकम् । शशिहासकं शशिनमपि हसति व्रीडयति । चन्द्रस्यापि विडम्बकमित्यर्थः । तारिता भवपीडातः उद्धृताः उपासकाः भक्ता येन तमित्यर्थः ॥३६॥

**निकुञ्जनवलीलनं व्रजवधूमनःशीलनं**
**श्रुतिव्रजसमीलनं सशिखिचन्द्रिकापीलनम् ।**
**भवद्नुजकीलनं त्रिदशवैभवोन्मीलनं**
**भजे गगननीलनं तनुरुचा हृताऽऽभीलनम् ॥ ३७ ॥**

निकुञ्जेषु नवानि लीलनानि ( लीलाः ) यस्य । व्रजवधूमनसां शीलनम् उपधारकं गोपीनां मनोवशीकारकमित्यर्थः । अथवा मनसः शीलकं समाधायकम्, 'शील समाधौ' । श्रुतिव्रजेन वेदमन्त्रसमूहेन समीलनम् ईडनं स्तवनं यस्य तमित्यर्थः । शिखिचन्द्रिकाः मयूरपिच्छचन्द्रकाः तत्सहितमुकुटधारकमित्यर्थः । भवत् जायमानं दनुजानां कीलनं वन्धनं पराजयनं यस्मात् । देवानां वैभवस्य उन्मीलनं विकासकम् । तनुकान्त्या गगनवत् नीलो वर्णो यस्य तम् । 'नील वर्णे' । हृतम् आभीलनं दुःखं येन, 'स्यात्कष्टं कृच्छ्रमाभीलम्' ॥३७॥

**अद्भुतमेतदिदानीमनुरागि मनो यथा यथा मग्नम् ।**
**क्वचिदपि नीलरसे, तत्तथा तथा जातमवदातम् ॥ ३८ ॥**

अनुराग( प्रणय-भक्ति )युक्तमेतत् मनः क्वचिद् नीलरसे नीलस्य श्रीकृष्णाख्यस्य रसे प्रणये यथा यथा मग्नं वेद्यान्तरशून्यं ( अत्यन्तासक्तम् ) जातं तत् तथा तथा अवदातं शुक्लवर्णं जातम् । नीले मग्नस्य श्वेतता अद्भुता । अवदातता स्वच्छता सर्वभावेन निष्पापता, इति तु परमार्थः ॥३८॥

अभङ्गश्लेषमूलिकया वक्रोक्त्या पद्यद्वयम्—

**कृता केनेदृशी कान्त्या मानवेऽत्र प्रभावती ।**
**मानवेत्रकरा नूनं तेनेयं जयति प्रियम् ॥ ३९ ॥**

अस्मिन् मानवे मर्त्यलोके कान्त्या ईदृशी प्रभावती तेजःसम्पन्ना केन कृता ? इति प्रश्नः । 'मानवेत्र' इति एकं पदं स्थितीकृत्य—'मानवेत्रकरा' मानसूचकं वेत्रं करे यस्याः, संमानसूचकवेत्रधारिणी, अतएव इयं सौभाग्यवती प्रियं जयति स्ववशे करोतीति वक्रोक्त्या द्वितीयोऽर्थः ॥३९॥

कृता केनेदृशी मूर्त्तिः काञ्चनी प्रतिमेव ते ।
प्रियलोचनयोरञ्चत्यमृतानन्दसेचनाम् ॥ ४० ॥

काञ्चननिर्मिता प्रतिमा ( मूर्तिः ) इव सुघटिता ते ईदृशी मूर्तिः ( तनुः ) कीदृशेन विधात्रा निर्मिता ? या प्रियतमस्य नेत्रयोः अमृतस्य अक्षयस्य आनन्दस्य सेचनां ( निर्वापणम् ) अञ्चति करोति ॥४०॥

इयं चार्थश्लेष मूल—वक्रोक्तिः—

कौटिल्यं विदधाति पद्मनयने केशव्रजस्तावको
वक्रत्वं प्रकटीकरोति तरुणि त्वन्नेत्रयोः सा गतिः ।
काठिन्यं कुरुते भवांस्तव युगं कल्याणि ! वक्षोजयो—
रित्येवं हरिराधिकासमुदिता वाचः कलाः पान्तु नः ॥४१॥

सभङ्गश्लेषेण वक्रोक्तिः—

राधे यस्तव मानसे बहिरसौ दृश्यो न मन्मानसे
किं धेयं द्रविणं ब्रवीषि ? किमुहा नाद्रेऽनुरागस्तवकिल ।
हाने कस्य वदानुरक्तिरुदयत्याद्रेऽपि नन्दात्मजे
सैतस्य व्रजमानवस्य नितरां चेद्वेत्सि सर्वं सखि ॥ ४२ ॥

प्रणमामि विश्वसारां वसुधातलविस्फुरत्सुधाधाराम् ।
हिमगिरिकृतावसारां ब्रह्मानन्दैकरूपरसधाराम् ॥ ४३ ॥

संपूर्णविश्वस्य सारभूताम्, पृथिवीतले प्रसरन्ती सुधाया धाराम् [ किं वा भूतले विद्यमानस्य अमृतस्य आधारभूताम् ] ब्रह्मानन्देन एकरूपो यो रसस्तस्य धारां ( गङ्गाम् ) प्रणमामि ॥४३॥

सुन्दरतरलतरङ्गां तुङ्गामङ्गातितापभयभङ्गाम् ।
कलये शिवैकसङ्गां गगनाङ्गणरिङ्गणोद्गतां गङ्गाम् ॥ ४४ ॥

तुङ्गाम् अत्युच्चाम् । अज्ञानाम् अतिशयिता ये तापाः, भयानि च तेषां भङ्गो यस्याः सकाशात् । अथवा तापानां भयस्य भङ्गो यया; ताम् । गगनाङ्गणे यद् रिङ्गणं प्रवहणं तेन उद्भूताम् । कलये भावयामि ( ध्यायामि ) 'कल' कामधेनुः ॥४४॥

**मातः पातकहारिणि ! भवत्पृषन्ति स्पृशन्ति चेदङ्गम् ।**
**सद्योऽनधीतविद्या अपि विद्योतन्त एव निरवद्याः ॥ ४५ ॥**

हे पापहारिके मातः ! भवत्याः पृषन्ति ( बिन्दवः ) चेत् अङ्गं स्पृशन्ति तर्हि अनधीतविद्याः ज्ञानशून्या अपि निरवद्याः निर्धूतपापाः सन्तः विद्योतन्ते दिव्यलोकेषु शोभन्ते । 'पृषन्ति बिन्दुपृषताः' अमरः ॥४५॥

**कलये कदा सदाऽहं मानसदाहं दृशैव दलयन्ति ।**
**सुखकारीणि जनानां संसृतिहारीणि तानि वारीणि ॥ ४६ ॥**

दृष्ट्यैव अर्थात् दर्शनमात्रेणैव मानसदाहं मनसः दाहं प्लोषं ( संतापम् ) नाशयन्ति ( शत्रन्तस्य बहुवचनम् ) जनानां संसृति-( भवेऽस्मिन् जन्ममरणादि )हारकाणि तानि जलानि अहं सर्वदा कदा कलये भावयामि ( अवगाहे ) ॥४६॥

**विदलितजनौघकलिलं कलिलंपटकम्पनैकपटु ।**
**शङ्करमौलिसलीलं सलिलं तव संतनोतु शिवम् ॥ ४७ ॥**

विदलितानि जनसमूहस्य कलिलानि कल्मषाणि येन तत् । कलिरूपलंपटस्य विटस्य कंपने भयदाने अत्यन्तनिपुणम् । शिवमस्तके सलीलं लीलाकारकम् । तव सलिलं शिवं कल्याणं संतनोतु करोतु ॥४७॥

**कलहंसविततिकान्तां भूतलशृङ्गारहारलतिकां ताम् ।**
**कलितकलि-पातकान्तां कलये कैलासपति-कान्ताम् ॥ ४८ ॥**

कलहंसपङ्क्तिभिः कान्तां मनोहराम् । कलितः ( कृतः ) कलियुगसम्बन्धिपातकानाम् अन्तो नाशो यया ताम् । भूमितलस्य शृङ्गारे हारलताभूतां तां कैलासपतेः ( शिवस्य ) कान्तां प्रियां ( गङ्गाम् )कलये भजामि प्रणमामि वा ॥४८॥

**आनन्दयुतपुरन्दरविमुक्तमन्दारमाल्यवृन्दभृताम् ।**
**सुरनरमुनीन्द्रवन्द्यां श्रीसिद्धितरङ्गिणीमहं वन्दे ॥ ४९ ॥**

मन्दार( देवकुसुम )माल्यानां वृन्देन समूहेन भृताम् । सिद्धिरूपां तरङ्गिणीं नदीं गङ्गाम् ॥४६॥

**केशवपदारविन्दद्वन्द्वजमकरन्दवृन्दसंमिलिताम् ।**
**कल्याणकोटिकलितां कामपि कलयामि तां मनोललिताम् ॥५०॥**

द्वन्द्व( युगल )जनितेन मकरन्दनिचयेन संमिलिताम् । कल्याणानां मङ्गलानाम् उत्कर्षेण, कोटिसंख्यया वा युक्ताम् । मनसः कृते ललितां ( मनोहराम् ) अनिर्वचनीयां तां ( श्रीगङ्गाम् ) कलयामि भजामि ॥५०॥

**श्रीकृष्णकविमुखेन्दुप्रसृतसुधापूरविस्फुरद्वर्णम् ।**
**अष्टकमष्टकलाढ्यं शिष्टस्य निराकरोतु भवकष्टम् ॥५१॥**

प्रसृतेन ( प्रवाहितेन ) सुधापूरेण दीप्तिशालिनः वर्णाः ( अक्षराणि ) यस्मिन् तत् । अष्टकलाः अष्टानुप्रासाः ॥५१॥

**वाणीं चैव भुवं च सर्वजनतादैन्याऽपहारीत्यतो**
**धर्मं चैव धनं च साधुसुहृदां दृष्टिसुधावृष्टिभिः ।**
**नित्यं पासि, बुधैरुपासितपदो भासि, प्रयासि प्रथां**
**श्रीगोपेन्द्र इति प्रकाशितगुणो विद्वद्गणैर्गीयसे ॥५२॥**

[ गोशब्दस्यार्थाः ]

सर्वजनतायाः दैन्यस्य अपहरण( नाशन )कारी असि, अतः दृष्टिरूपाभिः सुधा–वृष्टिभिः साधूनां सुहृदां च वाणी–भूमि–धर्मादिकं पासि ( रक्षसि ) । अतः गो ( वाणी–भूम्यादीनां ) पालनकर्तेति 'गोपेन्द्र' इति प्रसिद्धिं यासि । विद्वद्गणैः गोपेन्द्र इति च गीयसे ॥ ५२

**कादिस्वरभंगाहित रत सनययुतं प्रगतप्रभो शाधि ।**
**पुंसतैजसादिकपणयलसत्प्रतापोसि *माधवनरेन्द्र ॥५३॥**

**सौन्दर्यैकनिकेतनप्रविलसद्विद्युच्छटाभास्वरां ( विग्रहाम् )**
**पूर्णेन्दुद्युतिदीप्यमानवदनश्रीदृक्चकोरीसुखाम् ।**
**लीलालोलितलोचनाम्बुजभृतप्रेमप्रसादाऽमृतां**
**श्रीमत्कल्किहरिप्रियां हरिसमां वन्दे सुशीलां श्रियम् ॥५४॥**

सौन्दर्यस्य प्रधानस्थानभूता प्रविलसन्ती या विद्युच्छटा ( दीप्तिप्रसरः ) तया भास्वरां जाज्वल्यमानाम् । पूर्णचन्द्रस्य कान्त्या दीप्यमाना या मुखशोभा तया दृष्टिरूप-चकोरीणां सुखकारिणीम् । लीलया लोलिते चञ्चलीकृते ये लोचनाम्बुजे तयोर्मध्ये भृतं प्रेम्णः प्रसादभूतम् अमृतम् ( अलौकिकाह्लादः) यस्याः ताम् । कलि..अपहरेः ( विष्णोः) प्रियतमाम् अतएव हरेस्तुल्यां श्रियं प्रणमामि ॥ ५४

भूमौ धर्मधुरस्य विष्णुयशसो देवप्रभायास्तथा
सानन्दोल्लसदीक्षणद्वयभृतप्रेम्णा सदा लालिताम् ।
शृङ्गारोज्ज्वलवेशपेशलपटालंकारसंशोभितां
श्रीमत्कल्किहरिप्रियां हरिसमां वन्दे सुशीलां श्रियम् ।। ५५ ॥

धर्म्मस्य धूः ( यानंमुखं'जूडा' )भूनस्य विष्णुयशसः (यस्य गृहे जन्माऽभवत् तस्य), देवप्रभा कल्किनो माता । सानन्दम् उल्लसति ( प्रमोदप्रफुल्ले) ईक्षणद्वये भृतेन प्रेम्णा । शृङ्गारार्थम् उज्ज्वले वेशे पेशलाः ( सुन्दराः, निपुणा वा) ये वस्त्राऽलंकाराः तैः शोभिताम् ॥ ५५ ॥

[ अथ प्रबोधः ]

जय जय जय कल्कीश कलितकलिकलुषनिवारण ।
धर्मपथप्रथनैकनिपुण मङ्गलगणकारण ।
संततसंनिधिवर्तिसुमतिनारदमुनिराजित ।
याज्ञवल्क्यमुनिसहितमहितनरसभासभाजित ।।
जय जय तत्क्षणनिर्दलितगलितवेदशासनमनुज ।
जागरणमेहि मयि धेहि दृशमुपसि विष्णुयशसस्तनुज ।।५६।।

महाकमलकाननान्तरविराजमानद्युति-
स्फुरन्तुहिनदीधितिप्रचुरमण्डलान्तर्गतम् ।
परागपरिरंभणप्रभवसंभ्रमानन्दभू-
निरन्तरसुधारसस्नपितमङ्घ्रियुग्मं भजे ।।५७।।

कल्किरूप ईश स्वामिन् । कलितं ( कृतम् ) कलिकलुषाणां कलिकालपात-कानां निवारणं येन तत्संबुद्धौ । धर्ममार्गस्य प्रथने विशदीकरणे अतिनिपुण । निरन्तरं

---

* पूर्वार्द्धे कार्त्स्न्येन, उत्तरार्द्धे तैक्ष्ण्येनेति बोध्यम् ।

समीपवर्तिना सुबुद्धिना नारदमुनिना शोभित ! याज्ञवल्क्यमुनिसहितायां पूज्यस्य नरस्य तन्नामकदेवस्य सभायां सभाजित सत्कृत । किं वा नराणां सभया । तत्क्षणं विदलिताः नाशिताः गलितवेदशासनाः [ गलितम् उल्लंघितं वेदशासनं वेदाज्ञा यैस्तादृशाः ] मनुजा नरा येन तत्सुंद्धौ । जागरणम् एहि प्राप्नुहि, जागृहि । मयि दृष्टिं धेहि स्थापय, महद् यत् कमलकाननं तस्याऽभ्यन्तरे विराजमाना द्युतिर्यस्यतत् । स्फुरन् दीप्यमानो यः तुहिनदीधितिः चन्द्रः तस्य पूर्णमण्डले स्थितम् । परागस्य मकरन्दस्य परिरम्भणात् संमेलनात् संजातस्य संभ्रममिश्रितस्य आनन्दस्य भूमिभूतो यः सुधारसः तेन स्नपितं चरणयुगलम् (कल्किहरेः) भजे आश्रयामि ॥ ५६–५७ ॥

कृष्णे हि ललिते कुञ्जे राधिकाकलितेऽधुना ।
क्रियापदमदःपद्ये बहुधैव गवेष्यताम् ॥५८॥

राधिकाकलिते युक्ते कुञ्जे हे कृष्ण ! इहि गच्छ ॥ ५८ ॥

संचरच्चञ्चरीकौघ–चकोरचयमण्डिते ।
आवां सखि निकुञ्जेऽस्मिन् गुञ्जद्भ्रमररञ्जिते ॥५९॥

संचरन् चञ्चरीकाणाम् ( भ्रमराणाम् ) समूहो यस्मिन्, चकोरचयेन ( समूहेन ) मण्डिते आवाम् आ–अवाम् आगच्छम्, 'वा' गतिगन्धनयोः लङ् ॥ ५९ ॥

विपिने धृतसौन्दर्यमासाद्य सुरभिं तरुः ।
कोकिलालिकुलोद्गीतपत्रपुष्पसमृद्धिभिः ॥६०॥

तरुः सुरभिं वसन्तम् आसाद्य कोकिलानाम् अलीनां भ्रमराणां उद्गीतैः पत्राणां पुष्पाणां च समृद्धिभिः ( आधिक्येन ) सौन्दर्यम् अधृत अधारयत् । 'धृञ्' आत्मनेपदे लुङ् ॥ ६० ॥

सुरभिसमयसंपदा भृतानां मृदुमलयानिलचञ्चलीकृतानाम् ।
अभिनवमधुराम्रमञ्जरीणामधिकमरन्दभरं मिलिन्दवृन्दाः ॥६१॥

वसन्तसमयश्रिया पूर्णानाम् । आम्रमञ्जरीणाम् अभिनवम् ( सद्यस्कम् ) अधिकं मकरन्दभरं भ्रमरसमूहाः अधुः अपुः । 'धेट्' पाने लुङ्, बहुवचनम् । [ अभिनवम् अधुः आम्रमञ्जरीणामिति च्छेदः ] ॥ ६१ ॥

**दोर्दण्डकलितोद्दण्डमण्डलाग्रैकमण्डन ।**
**त्वं विपक्षैः सह क्षोणिरक्षार्थमदधारणम् ॥६२॥**

दोर्दण्डे कलितः ( विधृतः ) उद्दण्डः ( प्रचण्डः ) मण्डलाग्रः ( खड्गः ) एव एक मण्डनं यस्य तत्संबुद्धौ । त्वं क्षोणि( पृथ्वी )रक्षार्थम् विपक्षैः वैरिभिः सह रणम् अदधाः अधारयः अकरोः । 'धाञ्' लङ्, मध्यमपुरुषैकवचनम् ॥ ६२ ॥

**विभूतिधारणैर्गौरिपुरनिर्दारणैर्भवान् ।**
**पद्ये प्रकटमेतस्मिन् भवत्येव क्रियापदम् ॥६३॥**

नानाविधविभूतीनाम् ( वैभवानाम् ) धारणैः शत्रुपुगणां नितरां दारणैः ( नाशनैः ) भवान् भवति भवः शिव इव आचरति [ शङ्करायते ] । ततश्च अस्मिन् पद्ये 'भवति' ( भव इव आचरति, क्विप् ) इत्येव क्रियापदम् । यतः शिवोपि विभूतेः भस्मनः धारणम्, पुराणां तन्नाम्नामसुराणां दारणं करोति । इति द्वयोराचरणसाम्यम् ॥६३॥

**रिपूंश्छित्वा श्रियं धृत्वा कृत्वा पुण्ययशो भवन् ।**
**अतिगुप्तमदःपद्ये नामधातुक्रियापदम् ॥६४॥**

रिपून् छित्त्वा, श्रियं धृत्वा, पुण्ययशः कृत्वा, भवान् 'भवन्' भव इवाचरन् । शंकरायमाणः । अत्र 'भवन्' इत्येव क्रियापदम् ॥६४॥

**परमभीषणभूरितडिल्लता–तरलतिग्मकृपाणिविकासनैः ।**
**भ्रुकुटितर्जनवर्जनगर्जनैस्त्वमधुना रिपुवीरकदम्बकम् ॥६५॥**

परमभीषणाः भूरयः ( बह्व्यः ) याः तडिल्लताः [ लतासदृश्यो विद्युतः ] तद्वत् तरलानां तिग्मानां [ तीक्ष्णानाम् ] च कृपाणिकानां खड्गानाम् [ खड्गार्थकस्य कृपाणस्य लाघवार्थे स्त्रीत्वम् ] विकासनैः चमत्करणैः परिचालनैः । तथा भ्रुकुटिद्वारा तर्जनम्, वर्जनं शस्त्रं परिचालयतः शत्रोः प्रतिशस्त्रेण निवारणम् । तथा गर्जनं सिंहनादः, एभिः त्वम् रिपुवीराणाम् ( भटानाम् ) कदम्बकं समूहम् अधुनाः अकम्पयः । 'धूञ् कम्पने' लङ्, मध्यमपुरुषैकवचनम् । 'अधुनाः रिपु०' रोरीति रलोपः ॥६५॥

**विश्वाधारस्वरूपा सकलरसनिधिर्विश्वतेजोनिधानं**
**विस्फूर्जच्चण्डवेगा गगनगुणमयी या मनोमात्ररूपा ।**
**सैवोन्मत्याख्यरू(प) स्थितपरमशिवानन्दसंभेदमात्रात्**
**प्रत्यग्ज्योतिर्विमर्शात्मकविमलकला भाति भाले स्मरारेः ॥६६॥**

सकलस्य तेजसो निधिः । प्रोज्जृम्भमाणः प्रचण्डो वेगो यस्याः । आकाशस्य गुणः शब्दः, तन्मयी, शब्दात्मिका । मनोमात्ररूपा मनोवचानस्वरूपा । आनन्दसंयोगात् प्रत्यग्ज्योतिषः आन्तरिकप्रकाशस्य विमर्शात्मिका विमला कला । शिवस्यापि संमानावलम्बः ॥६६॥ ६

सैवाऽऽद्या सा पराख्या त्रिभुवनजननी सैव पश्यन्तिकादिः
सा नित्यं विस्फुरन्ती परमशिवशिरःशेखराग्रप्रतिष्ठा ।
सस्यन्दे मन्दमन्दं करुणरसवशात्पालयन्ती त्रिलोकीं
नाम्ना सा नर्मदाभून्निगमनिगदिता सिन्धुगानां धुरीणा ॥६७॥

[ त्रिलोक्याः पालनार्थम् ] आद्या—परा—पश्यन्तीरूपा । शिवशिरसः शेखराग्रे प्रतिष्ठिता । या कारुण्यवशाद् त्रिलोक्याः पालनार्थं भूमौ द्रवरूपा प्रादृश्यत । समुद्रगामिनीनां नदीनां धुरीणा श्रेष्ठा ॥६७॥

ज्वालामालाकरालाकृतिविकटतरः कोपि कालाग्निपूरः
स्वस्वान्तध्वान्तहारिद्युतिविजितमहानीलमाणिक्यकान्तिः ।
कन्या काचित्किशोरी कुवलयनयना चञ्चला चन्द्रवक्त्रा
पुण्यैः श्रीमेकलाद्रौ घनवनदिविपत्कंटकान्तर्विलोक्या ॥६८॥

ज्वालामालाभिः करालया भयङ्कर्या आकृत्या अतिविकटः । अन्तःकरणस्यान्धकारहारिका या नीला द्युतिस्तया विजिता महानीलमाणिक्यस्य ( 'नीलम' ) कान्तिर्यया । घनं वनं यस्मिन्नीदृशे दिविपत्कण्टके ( अमरकण्टकः एतन्नामकः पर्वतः तस्मिन् ) काचित्किशोरी कन्या [ नर्मदा ] विलोक्या ॥६८॥

यस्या नीरे गभीरे सकलभयहरे स्वां तनुं स्तम्भयित्वा
मज्जन्नेवाऽन्तरालोकयति परशिवानन्दसाक्षात्स्वरूपाम् ।
मार्कण्डेयप्रचण्डप्रचुरतरतपोराशिपुण्यच्छटाया-
स्तस्याः श्रीनर्मदायास्तव जननि सरित्का समत्वं प्रयातु ॥६९॥

यस्या नीरे निजशरीरं स्तम्भयित्वा किञ्चित्कालार्थं स्थिरीकृत्य मज्जन् अन्तः ब्रुडन् जनः परमशिवस्यानन्दरूपां भगवतीम् आलोकयति । किं वा निजतनुं शिवस्यानन्द—स्वरूपां पश्यति भगवत्याः सायुज्यं लभते । हे जननि मार्कण्डेयस्य तपोराशेः पुण्यद्युति—रूपायाः नर्मदायाः तव का नदी समतां प्रयातु ? न कापीत्यर्थः ॥६९॥

गोदा वीचिप्रमोदा यमभयशमनी यामुनाम्भःस्वरूपा
गङ्गा रिङ्गत्तरङ्गा परिलसदमृता सारसारस्वताऽम्बुः ।
कावेरी चैव कृष्णा सकलभयहरा भीमरूपा भवित्री
विस्फूर्जत्कोटितीर्थाश्रितबहलमदा नर्मदा नः पुनीताम् ॥७०॥

विस्फूर्जन्ति उज्जृम्भमाणानि यानि गोदावर्यादीनि कोटिसंख्यकतीर्थानि तदाश्रितः तत्संबन्धी प्रचुरो मदो यस्याः, सर्वतीर्थाश्रयभूता एकैव सेयमिति गर्ववाहिनीत्यर्थः तत एव तरङ्गकारणकः प्रमोदो यस्याम् । ईदृशी गोदावरी । यमराजसंबन्धिभयहारिणी, अतएव यमभगिनी–यमुनासम्बन्धिजलस्वरूपा । प्रसरत्तरङ्गा सेयमेव गङ्गा । शोभमानाऽमृता सेयं सारभूत–सरस्वतीसम्बन्धि–अम्बुरूपा । इयमेव सरस्वतीसम्बन्धिसलिल–वाहिनीत्याशयः । इयमेव कावेरी कृष्णा च । ततः कोटितीर्थानां माहात्म्यगर्ववाहिनी श्रीनर्मदा अस्मान् पुनातु ॥७०॥

गच्छत्यान्वीक्षिकीयं क्षयमथ विशति व्याकृतिर्वह्निमध्ये
मीमांसा मूर्च्छिताऽभूदनिशमुपनिषत् खेदिता वेदनाभिः ।
मग्ना सा कापिली गीर्गुरुविरहगता योगगीर्भग्नभोगा
याते निर्वाणमातेजितसुकृतफले श्रीगुरौ लक्ष्मणाख्ये ॥७१॥

आतेजितस्य उज्जृम्भितस्य परां काष्ठां गतस्य सुकृतस्य पुण्यस्य फलभूते पितृचरणे श्रीलक्ष्मणभट्टाख्ये निर्वाणं मोक्षं गते सति–आन्वीक्षिकी दण्डनीतिः ( राजनीतिः ) क्षयं याति । व्याकृतिः व्याकरणम् । कापिली गीः सांख्यशास्त्रम् । योग( पातञ्जल )शास्त्रम् । भग्नः भोगः अध्ययनादिप्रचारः । विशिष्य परिचयः 'साहित्यवैभवस्य' वंशवीथ्याम् ॥७१॥

ॐतत्सद्ब्रह्मरूपः परमसुखमयश्चिन्मयस्त्यक्तमायः
श्रुत्यर्थैकान्तसारः सकलरसनिधिः सर्वसिद्धेर्विधाता ।
विश्वप्रत्यक्षसाक्षी विलसदनुभवानन्दराशिः प्रकाशः
प्रत्यक्चैतन्यपुञ्जः स जयति गिरिजावल्लभो विश्वनाथः ॥७२॥

सत्तात्मकः ब्रह्मरूपः, परमसुखमयः आनन्दरूपः, चिन्मयः चैतन्यरूपः, ततश्च उपनिषद्वर्णितः सत्चित्आनन्दरूपः । मायाप्रपञ्चाद्दूरगम्यः । वेदार्थानाम् एकान्ततः चरमः सारभूतः वेदान्तवेद्यः । रसानामाश्रयः । विश्वप्रत्यक्षसाक्षी । विलसन् अनुभव–गम्यः आनन्दराशिर्यस्मिन् । मायाद्यावरणात् परः, अतएव सर्वदा प्रकाशः ॥७२॥

ॐकारं तारतारं तरलितभुवनं भावरूपं भवन्तं
भूतं भव्यं भवानीविलसितसहितं सत्स्वरूपं चिदेकम् ।
आनन्दं विश्वकन्दं रतिपतिकदनं सूर्यचन्द्राग्निनेत्रं
नीरूपं सर्वरूपं भवभयहरणं भर्गदेवं भजामः ॥७३॥

तारतारम् सर्वेषां तारकम्, तारकमन्त्रेण तारकं वा । तरलितानि मायाद्वारा चञ्चलीकृतानि भुवनानि येन तम् । भावना—स्वरूपम् । भवन्तं वर्तमानकालिकसत्तावन्तं, भूतं भूतकालिकसत्तावन्तम्, भव्यं भविष्यत्कालिकसत्तावन्तम् । भवान्याः श्रीपार्वत्याः आनन्दविलासेन सहितम् । चैतन्यात्मकम् विश्वस्य कन्दं मूलम् । नीरूपत्वेपि सर्वरूपम्, ब्रह्मरूपत्वाद् विरुद्धधर्माश्रयम् ॥७३॥

उग्रेणोग्रव्रतेन त्रिभुवनजननस्थापनोद्वासकर्त्रा
भर्त्रा सर्वप्रियेण श्रुतियुवतिशिरोभाग्यसीमन्तकेन ।
स्वःसाम्राज्यास्पदेन क्षयितजनरुजा राजयोगैकभाजा
योक्त्रा योगीश्वरेणाद्भुतमहिमयुजा केनचित्पालिताः स्मः ॥७४॥

उग्रं कठिनं भक्तोद्धरणादिव्रतं यस्य तेन । उद्वासः संहारः । श्रुति( वेद )रूपाया युवत्याः शिरसि भाग्यभूतेन सीमन्तकेन ( केशवेष 'माँग' ) । स्वर्लोकस्य साम्राज्य—स्थानभूतेन । क्षयिताः नाशिताः जनानां रुजः सर्वविधाः पीडाः येन । राजयोगम् ( समाध्यात्मकम् ) सर्वदा सेवमानेन । योगेन योजनकर्त्रा । तथापि सर्वेषां योगिनाम् ईश्वरेण उपास्येन । अद्भुतमाहात्म्ययुक्तेन अनिर्वचनीयेन रक्षिताः स्मः ॥७४॥

शान्ताकाराय शश्वद्विरचिततपसे तप्यते तापहर्त्रे
विश्वारामाय विश्वग्विभवभरभृते भव्यरूपप्रभाय ।
त्रैलोक्यत्राणकर्त्रे सुकृतमयधिये सर्वलोकैकनेत्रे
दीव्यन्नेत्राय कस्मैचिदपि परचिते दीयतां चित्तमेतत् ॥७५॥

शश्वत् निरन्तरं कृततपश्चर्याय । तपश्चर्यायां स्वयं तप्यन् तापमनुभवन्नपि अन्येषां ( भक्तानां तापहारकः तस्मै ) विश्वानि आरमन्ति विश्राम्यन्ति यस्मिन्, तस्मै ( अन्ते सर्वाधिष्ठानभूताय ) । विश्वग् सर्वतो व्यापी यो विभवभरः सर्वविधं वैभवं तद्धारकाय । भव्यानि रूपाणि प्रभाश्च ( कान्तयश्च ) यस्य तस्मै । सुकृतमयी धीः ध्यानं यस्य तस्मै ।

सर्वलोकानाम् एकमात्राय ( अद्वितीयाय ) नायकाय । दीव्यन्ति प्रकाशमानानि नेत्राणि यस्य तस्मै । कस्मैचित् अनिर्वचनीयाय परचिते परमचैतन्यात्मकाय एतत् चित्तं समर्प्यताम्, तत्रैव चेतोविश्रामो भवतु, इत्यर्थः ॥७५॥

गङ्गाऽम्भोमग्नमूर्द्ध्नः सुमधुरवपुषश्चारुचन्द्रार्द्धयुक्तान्
मुक्ताच्चैतन्यरूपात्परमसुखतनोः सर्वसौन्दर्ययुक्तात् ।
निःशेषात्सर्वशेषाद् गिरिवरतनयाचारुवेशाद् विशेषाद्
विध्वस्तक्लेशलेशात्कलय शुभगतिं श्रीमतो भर्गदेवात् ॥७६॥

गङ्गाम्भसा ( जलेन ) व्याप्तो मूर्द्धा ( मस्तकं ) यस्य तस्मात् । मुक्तात् कर्म-वन्धेभ्यः अतीतात् । परमानन्दमयात् । निःशेषात् नास्ति शेषो यस्मात् परिपूर्णरूपात् । निःशेषाणामन्ते यः शिष्यते तस्मात् सर्वशेषात् । ''योऽवशिष्येत सोऽस्म्यहम्' इति प्रोक्तात् । विशेषात् सर्वतो विशिष्टात् । गिरिवरतनया पार्वती एव चारुवेशः सौन्दर्य-शृङ्गारो यस्य तस्मात् । अथवा गिरिवरतनयायाः चारुः वेशः प्रवेशः (अर्द्धाङ्गतया स्थितिः ) यस्मिन्, तस्मात् । सर्वदेवेभ्यो विशिष्टात् । विध्वस्तः नाशितः क्लेशस्य लेशोपि येन तस्मात् । शुभगतिं कलय प्राप्नुहि ॥७६॥

सर्वाङ्गैः साधितस्य प्रियसुकृतनिधेः सर्वयज्ञात्मकस्य
ज्ञानज्ञेयस्य शश्वद्‌ज्ञपनमयमहाशक्तिभाजः शिवस्य ।
भक्तौघत्राणहेतोः परमहितधियो भक्तिभावस्वरूप-
प्रव्यक्तस्थूलसूक्ष्माकृतिगरिमभृतः शंकरस्याश्रिताः स्मः ॥७७॥

सर्वैः अङ्गैः उपकरणैः साधनैः साधितस्य अनुकूलीकृतस्य । पुण्यनिधानस्य । यावन्मात्रैः ज्ञानैर्बोधैर्बोध्यस्य । किं वा अद्वैतस्वीकारात् शंकर एव ज्ञानात्मको ज्ञेयात्मकश्च तस्य । तथा शश्वत् सर्वदा ज्ञपन( ज्ञापन–वोधन )रूपमहाशक्तियुक्तस्य । ततश्च शिव एव ज्ञान–ज्ञेय–ज्ञापनरूप इत्याशयः । भक्ति–भावस्वरूपः, भक्तस्य यादृशी भक्तिः अनुरक्तिः, यादृशश्च भावः, भगवानपि तादृश एव प्रतीयते । 'यो यो यां यां तनुं भक्तः' इत्यनुसारम् । प्रव्यक्ताः सुस्पष्टाः स्थूलाः सूक्ष्माश्च ये आकाराः तेषां गरिमाणं माहात्म्यं विभर्ति तादृशस्य । अथवा स्थूल–सूक्ष्माकारान् गुरुत्वं च यो विभर्ति तादृशस्य ॥७७॥

शम्भौ सर्वप्रकाशे सकलगुणगृहे निः(सहे)ष्कले निःसहाये
निःसामान्ये निरीहे निरुपधिकरुणे नित्यनिर्मुक्तमाये ।

**विश्वातीते त्रिवीते त्रिपथविरमिते देवदेवेऽखिलेशे**
**तस्मिन् कस्मिंश्चिदस्मिन् प्रमथपरिवृढे सर्वभावैर्गताः स्मः ॥७८॥**

मायाद्यावरकशून्यत्वात् सर्वप्रकाशे । निष्कले परिपूर्णत्वाद् विभागशून्ये । सर्वात्मकत्वाद् द्वितीयशून्ये । विशेषत्वात् निःसामान्ये, किंवा अद्वितीयत्वात् जात्या शून्ये । निरीहे पूर्णकामत्वात् इच्छाशून्ये । निरुपधिः निच्छला करुणा दीनेषु दया यस्य तस्मिन् । नित्यं मायाऽतीते किंवा नित्ये शाश्वते, मायातीते च । विश्वेभ्यः सर्वेभ्यः अतीते अतिक्रान्ते, सर्वाधिके । त्रिभ्यः सत्त्वादिभ्यो गुणेभ्यः वीते अतिक्रान्ते (निर्गुणे) । त्रयाणां गुणानां पथः मार्गाद् विरमिते दूरीभूते कस्मिंश्चित् अनिर्वचनीये 'तत्त्वमसि' इति महावाक्यबोध्ये अस्मिन् प्रमथानां गणानां परिवृढे स्वामिनि श्रीशिवे सर्वभावैराश्रिताः स्म ॥७८॥

**विभक्तिसप्तकं सद्यः श्रीकृष्णकविनिर्मितम् ।**
**आकर्ण्य करुणासिन्धुः करोतु करुणां शिवः ॥७९॥**

**खलवक्त्रवचःकरपत्रशतैर्विनिकृत्तहृदः कविराजवराः ।**
**स्वगुणज्ञगणप्रणयप्रसरद्रसलेपनयाऽपनयन्तु रुजम् ॥८०॥**

खलमुखनिर्गतवचनरूपैः 'करपत्र'( क्रकच )'करोत'शतैः विपाटितहृदयाः कविश्रेष्ठाः, स्वस्य गुणज्ञगणानां प्रणयः ( प्रेमा ) एव प्रसरन् रसः क्षतपूरकः रसः ( महौषधम् ) तस्य लेपनेन रुजं पीडां व्यथामपनयन्तु ॥८०॥

**निगमगिरमतीत्य वर्तमानाममितनिजप्रमितिप्रसादगम्याम् ।**
**त्रिभुवनमयचित्रलेखभित्तिं चिरतरचिल्लहरीं विचिन्तयामः ॥८१॥**

अवाङ्मनसगोचरत्वात् वेदत्रयीम् अतिक्रम्य वर्तमानाम् । अपरिमिता या निजा प्रमितिः ( प्रमाणम् ) तस्या अनुग्रहेण बोद्धुं शक्याम् । सा यदि वाञ्छति तदैव उपासकेन बोद्धं शक्या—'यमेवैष वृणुते तेन लभ्यः' इति । [ त्रिभुवनरूपो यश्चित्रलेखः तस्य कृते भित्तिम् , यामाधाकारीकृत्यैव त्रिभुवनस्योत्पत्तिस्थित्यादिकमस्तीत्याशयः । चिरतरां शाश्वतीं चैतन्यलहरीं [ चैतन्याधारं भगवन्तं, जगदम्बां वा ] ध्यायामः ॥८१॥

**तारुण्योद्भेदभाजां कटिचरणरणत्किङ्किणीनूपुराणां**
**प्रोद्यन्मन्दानिलान्दोलितपरमपटस्पष्टनर्मस्थलानाम् ।**

गम्भीरावर्तनाभीलसदुदरवली-रोमवल्ली-युताना-
मेतासां मालवीनां कलयति मदनोन्मादनं मन्दहासः ॥८२॥

तारुण्यस्य उद्भेदं नवप्ररोहं भजन्ति तासाम् । कट्यां रणन्ती किंकिणी ( रशना-घण्टिका ), चरणयोः रणन्तौ नूपुरौ यासां तासाम् । मन्दानिलेन आन्दोलिते (प्रकम्पिते) परमपटे महार्हवस्त्रे दृश्यमानानि स्तन-नाभ्यादिगोप्यस्थलानि यासां तासाम् । गम्भीरावर्त( गर्त )युक्ता नाभी, लसन्ती या उदरस्थिता त्रिवली, तत्समीपस्था या रोमवल्ली तद्युक्तानाम् । एतासां मालवदेशवासिसुन्दरीणां मन्दहासः मदनोद्दीपनं करोति ॥८२॥

शिप्राऽम्भःप्रेङ्खितेभ्यः परमकरुणया राजहंसोत्तमेभ्यः
स्वान्तेवासिभ्य एभ्यः स्मरनिगमगणाध्यापनं निर्दिशन्ति ।
पादाङ्गुष्ठाऽऽङ्गुलीयाभरण-चटकिकाचारुचाटूक्तिदानै-
र्मन्दान्येवोद्धतानि प्रविदधति मुदं मालवीनां गतानि ॥८३॥

शिप्रा( नदी )जलात् प्रेङ्खितेभ्यः चलितेभ्यः ( आगतेभ्यः ) स्वशिष्येभ्य एभ्यो राजहंसेभ्यः । पादाङ्गुष्ठयोः, तथा अङ्गुलीयानाम् आभरणभूताः याः चटकिकाः ( 'चुकटी'-इतिव्रजभाषा ) तासां झणत्काररूपैः चाटूक्तिदानैः परमया करुणया कामदेवस्य निगम-( शास्त्र )समूहस्य अध्यापनं निर्दिशन्ति उपदिशन्ति कुर्वाणानि [ निर्दिशत् इति शत्रन्तस्य प्रथमाबहुवचनम्-निर्दिशत् निर्दिशती निर्दिशन्ति इत्यादि ] एतानि मन्दानि मन्थराणि एव उद्धतानि उन्मदानि मालवस्त्रीणां गमनानि मुदं कुर्वन्ति । हंसेभ्यः कामागमोपदेशं कुर्वाणानि इमानि मालवीनां गमनानि कामागमरसिकानां स्मरं प्रबोध्य मोदं कुर्वन्ती-त्याशयः ॥८३॥

कुरङ्गीदृग्भङ्गीभवनरसभङ्गीकृतिचणै-
श्चकोरीणां चञ्चूपुटचतुरिमाऽऽचान्तिचटुलैः ।
कटाक्षैरालोक्य स्मरकरगतीकृत्य परितो
मुनीनामप्यन्तर्मदयतितमां मालववधूः ॥८४॥

हरिणीनां या दृग्भङ्गी ( विलोकनमाधुरी ), तस्या भवन( गृह )भूतैः, तथा रसस्य ( आनन्दस्य ) भङ्गीकरणचणैः प्रवाहणचतुरैः । अतएव चकोरीणाम् ( दर्शन-माधुर्यार्थं प्रसिद्धानाम् ) चञ्चुपुटस्य चतुरिम्णः चातुर्यस्य चयने चञ्चलैः 'ईदृशैः कटाक्षैः

आलोक्य मालवस्त्री चन्द्रिकाऽऽचमनचातुर्यार्थं मुनीनामपि अन्तः ( अन्तःकरणं ) सर्वतः स्मरस्य कामदेवस्य करगतीकृत्य कामपरवशं कृत्वा, इत्यर्थः । मुनीनामपि अन्तः अन्तः–करणं मदयति मत्तं करोति । अथवा मुनीनामपीति शेषे षष्ठी । ततश्च मुनीन् अपि रसवासनया मत्तान् करोतीत्यर्थः ॥८४॥

अये ! रज्यद्बिम्बीफलवपुषि वस्तुन्युपहितै–
रुदञ्चत्पूर्णेन्दुप्रसृमरविभातस्करतरैः ।
अदःसाक्षाद्द्राक्षापरिणतरसाऽऽक्षालिततरैः
सुधानां स्रोतोभिर्मदयसि मनो मालवि मुधा ॥८५॥

अये मालवि ! रज्यत् परिपाकेन रक्तीभवद् यद् बिम्बसम्बन्धि ( किन्दूरी )–फलम् तत्सदृशाकारे वस्तुनि ( ओष्ठरूपे पदार्थे ) उपहितैः स्थापितैः, उदञ्चन् उदीयमानो यः पूर्णचन्द्रः तस्याः प्रसृमर्याः ( प्रसरणशीलायाः ) प्रभायाः अपहरणकारकैः अदः [ अमीभिः, समासे विभक्तिलोपः ] साक्षाद् द्राक्षायाः परिपक्वरसेन आसमन्तात् अत्यन्तं क्षालितैः ( धौतैः, अतितमां मधुरैरिति भावार्थः ) । सुधानां अमृतानां द्रवैः व्यर्थमेव मनः मत्तं करोषि ! तव दर्शनमात्रेणैव मनः स्मरकरगतं भवति । इदानीं च बिम्बसदृश–मधुराऽरुणे अधरे प्रसृतैः, पूर्णचन्द्रकान्तिचौरैः उज्ज्वलदन्तकान्तिमिश्रैः सुधानाम् अमृतानां द्रवैः, अर्थाद् मधुरतरैर्वचनैः किमिति सहृदयानां मानसं प्रमत्तं करोषि ! पूर्वत एव प्रमत्तीकृते मानसे एवं यत्नेन प्रमादनम् अस्थाने परिश्रम एवेत्याशयः ॥८५॥

* दयावलितलोचना भुवि सरोचना राजते
सदा किमपि शोचनाऽवसरमोचना संसदि ।
नयाऽऽकलितवाङ्मयाऽपरसुधामयी शुद्धिदा
शिवा जयति संततं मनसि शाम्भवीया तनुः ॥८६॥

दयायुक्तानि लोचनानि यस्याः । सरोचना गोरोचनावद् गौरी । सभायाम् शोचनाव-सरस्य सविषादं विचारावसरस्य मोचना दूरीकारिणी [ यस्या अनुग्रहेण तत्कालमुत्तर स्फुरति, न विचारावसरो मृग्यते, इत्याशयः ] । नयेन नीत्या युक्तं यद् वाङ्मयं तदेव अपरसुधा तद्रूपा । वाङ्मयामृतरूपिणीत्यर्थः । शिवरूपा शम्भुतनुर्जयति ॥८६॥

---

* अत्र पद्यद्वये आर्यावृत्तद्वयम् आदिमवर्णं त्यक्त्वा निःसरति ।

भयाऽऽकुलनयातिगा द्विजमनोग्रहा कौलिनी
शिवा श्रुतिषु गीयते परममुक्तिदात्री सदा ।
रमामपि वियौतु सा शुभशतावहोमोन्मुखी
मनोगतिषु विग्रहा परमविग्रहा दामभाः ।। (परमविग्रहान्तर्मनाः)।।८७।।

सहैव सर्वविद्याभिः सहैव श्रुतिभूषणैः ।
सहैव सकलैः शास्त्रैर्लक्ष्मणाख्यो दिवं गतः ।।८८।।

श्रुति( वेद )रूपैः भूषणैः । सकलैः शास्त्रैः सह । विद्या–श्रुत्यादीनि सर्वाण्येव सन्ति, परमेतेषां विशेषतात्पर्यज्ञः स एवासीत् । अतएव विद्या–शास्त्रादीनि तेन सहैव गतानीति प्रोच्यते । विद्यादीनामलौकिकमर्मज्ञत्वं ध्वन्यते ।।८८।।

अविद्या प्रावादीत्, अतिसुखनिनादी कलिरभूत्
दुराचारोऽनादीद्, अघशतपदं दीप्तिमतनोत् ।
अवद्यानां संसत् कृतमतिरशंसत्स्वकुशलं
यदद्य श्रीलक्ष्मा गुरुरधनलक्ष्माऽऽश्रित इति ।।८९।।

अविद्या प्रकर्षेण संलापादिकमकरोत्, लक्ष्मणे स्थिते तु अविद्याया नासीदुच्चारणस्यापि शक्तिः । तस्या मुखमुद्रणमभूत् । कलिकालः अतिसुखेन नादकारी अभूत् ( तत्प्रतिरोधकस्य लक्ष्मणस्याऽभावात् ) । अघ( पाप )शतानां पदं स्थानं प्रदीप्तमभूत्, अन्यथा पापानां स्थानं लुप्तप्रायमभूदित्यर्थः । अधमानां संसद् गोष्ठी कृतमतिः सती बुद्धिं स्थिरीकृत्य स्वकुशलं सूचयति । अन्यथा कुत्सितानां समाजः स्वकुशलनिवेदनस्यापि साहसं नाऽकार्षीदित्यर्थः । यतो ह्यद्य श्रीलक्ष्मा श्रीलक्ष्मणो गुरुः ( पिता ) निधनलक्ष्म लक्षणमाश्रितः । निधनं गत इति यावत् ।।८९।।

श्रीलक्ष्मणगुरुचरणे कुर्वति कैलासधामविश्रामम् ।
तद्वाञ्छयैव सकलाः साङ्गोपाङ्गा ययुर्वेदाः ।।९०।।

कैलासधाम्नि विश्रामं कुर्वति सति । तस्य श्रीलक्ष्मणस्य इच्छया अङ्गोपाङ्गसहिता वेदा विश्रामार्थं ययुः । स एव वेदानां तदङ्गोपाङ्गानां च अद्वितीयो वक्ता, प्रचारकश्चाऽऽसीदित्याशयः ।।९०।।

मुक्ताभिः शुक्तिवृन्दं करवलयगणैर्दन्तिनोऽलक्तलेशै-
र्वृक्षौघं क्षौमवस्त्रैः कृमिकुलनिकरं गोचयं रोचनेन ।
कस्तूरीभिः कुरङ्गान् कनककदलिकाश्चापि कर्पूरलेपै-
रेतास्ते तारयन्ते तव जननि तटे मालवानां वधूट्यः ॥६१॥

रेतांस्ताः--

हे जननि नर्मदे तव तटे मालवानां वधूट्यः मुक्ताभिः ( हारपरिधृतैः मौक्तिकैः ) मौक्तिकाधारभूतं शुक्तिवृन्दं भवसागरात् तारयन्ते उद्धरन्ति । करयोः विधृतैः दन्तनिर्मित-वलय( 'चूडी' )गणैः दन्तिनः गजान् तारयन्ते । एवं 'तारयन्ते' इत्यस्य सर्वत्र संबन्धः । शरीरे विधृतैः क्षौमवस्त्रैः ( कृमिकोषतः समुत्पन्नैः ) कृमि( कीट )वंश-समूहम् तारयन्ते । पदरक्तिमाऽर्थं लिप्तैः अलक्तक( 'अलता' )लेशैः अलक्तकजन्मदातारं वृक्षसमूहम् । रोचनद्वारा तदुत्पादकं धेनुसमूहम् । कुच-तिलकादिषु लिप्ताभिः कस्तूरीभिः तदुत्पादकान् कस्तूरीमृगान् । तिलकादिषु कृतैः कर्पूरस्य लेपैः तदुत्पादिकाः कनककदलीः तारयन्ते । ततश्च मालववधूट्य एताः तव सलिलस्पर्शेन शुक्तिका-दन्तिप्रभृतीन् तारयन्ते ॥६१॥

अवन्तीस्रवन्तीभवं तीर्थबिन्दुद्रवं तीरदेशे समासाद्य कश्चित् ।
परं चामरान्दोलसंचारितेन्द्रः प्रपञ्चातिगो याति पञ्चाननत्वम् ॥६२॥

अवन्तीदेशस्य स्रवन्ती ( नदी ) नर्मदा, तद्भवं तीर्थबिन्दुप्रवाहं कश्चित् समासाद्य, देहावसानसमये चामरस्य आन्दोलनेन संचारितः स्वस्य पश्चाद् भागे अनुवर्तितः इन्द्रो येन ईदृशः सन् प्रपञ्चं विश्वस्य जन्म-मरणादिकं संसारम् अतिगच्छति उल्लङ्घ-यति ईदृशोऽसौ पञ्चाननत्वं शिवत्वं याति । नर्मदाजलसम्पर्कं प्राप्य नरः प्रपञ्चमुल्लङ्घ्य शिवस्वरूपो भवतीत्याशयः ॥६२॥

गीतिः--

मम मतिरतिविरमति चन्द्रभाले महाकाले । ( ध्रुवम् )
लीलालोलव्यालमाले कलितभूमीधरबाले
जटाजूटजटाले ! केलीविदलितदुःखजाले
निखिलसुरावलिभूपाले सुरधुनीचूडाले । गरलनिगलनाकण्ठेकाले
धत्त राऽरुणदृग्जाले सुकविकलानिधिकपाले ॥६३॥

अतिविरमति अतिशान्ति प्राप्नोति । चन्द्रो भाले यस्य तस्मिन् । लीलया लोला वक्षसि चञ्चलीभूता व्याल( सर्प )रूपा माला यस्य, तस्मिन् । कलिता स्वस्य अर्द्धाङ्गे स्थापिता पर्वतस्य बाला ( कन्यका ) येन । जटाजूटेन जटायुक्ते । क्रीडामात्रेणैव ( अनायासम् ) विदलितं चूर्णीकृतं दुःखवृन्दं येन । सुरधुनी गङ्गा एव चूडा (शिरोभागः) यस्य । विषस्य निगरणया ( भक्षणेन ) कण्ठदेशे स्थाने । धत्तूरस्य भक्षणेन अरुण-वर्णं दृग्वृन्दं यस्य तस्मिन् । कलानिधेः कृते कृपाले कृपायुक्ते ॥९३॥

यन्त्रोद्यद्भूरिकाश्मीरजरुचिररसाऽऽसारवद्भिः समुद्यद्-
झम्पागम्भीरनिर्घोषितयुतवनितानूपुराऽऽरावकेकैः ।
रक्ताम्भोदायितं तद्दिशि दिशि चलितैः केलिधूलीसमूहैः
लोलाऽसौ हेमदोला कलयति ललितं तत्र विद्युद्विलासम् ॥९४॥

चञ्चला असौ हेमनिर्मिता दोला ( हिन्दोला ) ललितं विद्युतः ( चपलायाः ) विलासं शोभां धारयति । ततश्च हिन्दोलायां मेघाडम्बरं रूपयति । तथा हि—यन्त्रैः 'पिचकारी' इतिख्यातैः उद्यन् उच्छलन् भूरिकाश्मीरजेन ( केशरेण ) रुचिरः सुन्दरः रसासारः जलप्रवाहः तद्वद्भिः । समुद्यन्ती ( वेगेन हिन्दोलनसमये उत्पद्यमाना ) या झम्पा ( वेगेन हिन्दोलायातायातम् ) तस्या झम्पाया गंभीरनिर्घोषितेन ( शब्देन ) युताः ये वनितानूपुराणाम् आरावाः शब्दाः, ते एव केकाः मयूरशब्दाः येषु तैः । दिशिदिशि प्रसृतैः केलिधूली( क्रीडार्थं वर्णयुक्ता धूली, 'गुलाल' )समूहैः रक्ताम्भोदायितं रक्तमेघसदृशमनुकरणं कृतम् । पिचकारीजलैः वर्षणधारा, झम्पासमये नूपुरशब्दाश्च केकायिता भवन्ति । 'गुलाल'घटा रक्तमेघसदृशी भाति । सुवर्णनिर्मिता प्रस्फुरद्-दीप्तियुक्ता हिन्दोला स्वचमत्कृत्या विद्युद्विलासं च पूरयति । एवं च फाल्गुनमासे जातः सोयं दोलामहोत्सवः मेघघटाप्रमोदमनुभावयतीति सर्वस्याशयः ॥९४॥

धम्मिल्लोल्लासिमल्लीपरिमलपटलान्दोलिलोलालिमालाः
पार्श्वद्वन्द्वस्थिताऽऽलीजनकलितकरप्रेरणापूर्यमाणाः ।
केलीधूलीकदम्बारुणसकलदिगुल्लासिकाश्मीरतोया-
स्ते नित्यं कीर्तिकन्याव्रजपतिसुतयोः पान्तु दोलाविलासाः ॥९५॥

धम्मिल्ले ( केशबन्धे 'जूडा' ) उल्लासिनी शोभमाना या मल्ली 'बेलापुष्पम्' तस्याः परिमल( सुगन्ध )समूहेन आन्दोलिनी इतस्ततो भ्राम्यन्ती चञ्चला अलि(भ्रमर)

माला येषु ते । पार्श्वद्वन्द्वे हिन्दोलायाः उभयपार्श्वयोः स्थितः यः आली( सखी )जनः तस्य कलितया ( कृतया ) करयोः प्रेरणया [ कराऽऽघट्टनेन ] पूर्यमाणाः संपाद्यमानाः । केलीधूलीकदम्बेन 'गुलाल'पटलेन अरुणासु रक्तासु सकलदिक्षु उद्भासि शोभमानं काश्मीरतोयम् केशरवर्णं केशरजलं येषु ते कीर्तिसुता( राधिका )नन्दतनययोः दोला-विलासाः हिन्दोलोत्सवाः रक्षन्तु ॥९५॥

अन्योन्याऽङ्गविलासवर्द्धितमहानन्दानि मन्दानिल-
स्पृष्टान्योन्यदुकूलसौरभमिलत्कुञ्जोदराणि स्फुटम् ।
अन्योन्यस्मितशोभितानि कलितान्युच्चैर्वयस्याजनै-
र्हिन्दोलाचलितानि कीर्तितनयाश्रीकृष्णयोः पान्तु नः ॥९६॥

अन्योन्यस्य परस्परस्य अङ्गविलासैः शरीरसंस्पर्शक्रीडाभिः वर्द्धितो महान् आनन्दो येषु तानि । मन्दानिलेन संस्पृष्टे ये अन्योन्यस्य दुकूले पट्टवस्त्रे तद्गतसौगन्ध्येन मिलन् निकुञ्जमध्यभागो येषु तानि । वयस्या( सखी )जनैः उच्चैः अत्यन्तं कलितानि शोभि-तानि । हिन्दोलायाः चलितानि आन्दोलनानि ॥९६॥

समदन्तस्तम्भयुगानलसदृशो दानवारिराजिमहेभान् ।
समदन्तस्तम्भयुगानलसदृशो दानवारि राजिमहेभान् ॥
तत्तद्गुणैरगाधाः सन्ति नगा धामनि स्त्रियोस्य हरेः ।
आधारः सखि राधा नियतमसाधारणप्रेम्णः ॥९८॥

अस्य हरेः श्रीकृष्णस्य नगा·······धामनि गृहे तैस्तैः गुणैः अगाधाः गम्भीराः अतुलनीयाः अनेकाः स्त्रियः सन्ति । किन्तु हे सखि ! असाधारणप्रणयस्य आधारः [ आश्रयः स्थानम ] नियतं निश्चितं राधा एवास्ति ॥९८॥

भृशं खलु दरिद्रतोऽप्यतिशयेन संतोषिणः
स्फुरद्विपुलबुद्धयोऽप्यभिधनि प्रसङ्गोदिताः ।
कदाचिदसुहानितोऽप्यतिभया यशःकामुका
वयं हृदि त उज्ज्वला दधति ये तदादित्यकम् ॥९९॥[दाक्षिणात्या इत्यर्थः]

अतिदीनपुरुषादपि अत्यन्तं संतुष्टाः । स्फुरन्ती कठिनेष्वपि सर्वेषु विषयेषु अप्र-तिरुद्धा बुद्धिर्येषां ते । अभिधनि धनिनामभिमुखेपि केनचित् प्रसङ्गेनैव उदिताः आगताः,

न तु दैन्याद् धनलिप्सया। कदाचित् अर्थात् अवसरे समुपागते असूनां प्राणानां हानेरपि अतिभयाः भयमतिक्रान्ताः, निर्भया इत्यर्थः। उपरितः कदाचित् श्यामा अपि वयं हृदि ते तादृशा उज्ज्वलाः स्मः ये अन्तः अभ्यन्तरे आदित्यं सूर्यं दधति धारयन्ति। हृदये येषां सूर्यस्य प्रकाशः प्रोज्जृम्भते वयं तादृशाः प्रोज्ज्वलाः स्मः। किंच वयं ते स्मः येऽन्तरादि त्यकं 'त्यक्' प्रत्ययं दधति। 'दक्षिणापश्चात्पुरसस्त्यक्' इति पाणिनीयसूत्रम्। तथा च दाक्षिणात्या वयमित्यर्थः ॥९९॥

उत्कूजत्कोकिलाश्वान् मलयमरुदिभान् भूरिचाम्पेयमल्ली–
कुन्दस्त्रक्स्वर्णमुक्ताभरणसमुदितानेकपुष्पच्छलेन ।
रत्नान्येतानि यत्नान्मधुऋतुसमयानीतमात्राणि ताव–
द्देव त्वं जैत्रयात्राफलसदृशतया सस्पृहाक्षैर्गृहाण ॥१००॥

हे देव माधवेन्द्र ! उत्कूजन्तः कोकिला एव अश्वाः तान्। मलयपवना एव इभाः हस्तिनः तान्। भूरि चम्पा–मल्ली–कुन्द–स्रजः एतन्निर्मितमाला एव स्वर्णमुक्ताभरणानि, एषु समुदितानां राशिभूतानाम् अनेकपुष्पाणां मिषेण मधुसमयेन ( वसन्तर्तुना ) आनीतमात्राणि एतानि पुष्परूपरत्नानि विजययात्रायाः फलसमुचितानि एतानि एव, न तु पाषाणरत्नानि, इति सस्पृहैः अक्षैः इन्द्रियैः, अथवा सस्पृहाक्षैर्जनैः ( तद्द्वारा ) उपहृतानि त्वं गृहाण स्वीकुरु। वसन्तेन सादरं समानीतानि पुष्पादीनि प्राकृतोपाय–नानि, भगवत्या प्रकृत्या प्रहितानीति सस्पृहं गृहाणेत्यर्थः ॥१००॥

अञ्जनाऽऽभघनभासमप्यनोभञ्जनाऽभयकरं दिवो भुवः ।
रञ्जनाभरभृतव्रजाङ्गनं कञ्जनाभमहमाश्रयेतमाम् ॥१०१॥

अञ्जनाभः कज्जलसदृशो यो घनः मेघः तद्वद्भाः कान्तिर्यस्य तादृशम्। अनो–भञ्जनः शकटभञ्जकः, तथा दिवः स्वर्गस्य भुवश्च अभयं करे यस्य स च। ततश्च अनो–भञ्जनश्च अभयकरश्चेति द्वयोः कर्मधारयः। रञ्जनायाः रञ्जनसामग्र्याः भरेण भृतं व्रजभूमेः अङ्गनं ( अजिरं ) येन ईदृशम्। कञ्जनाभं पद्मनाभं हरिम् आश्रये ॥१०१॥

एके त्वाराधयन्ति द्विपहयशिबिकास्यन्दनाद्यैस्तथैके
मुक्तामाणिक्यरत्नैर्जगति, तदपरे स्वर्णभारैरनेकैः ।
श्रीश श्रीद्वारकेशप्रभुवर ! तव तेषां च तेषां च तेषां
स्थाने स्थाने मया त्वं ध्रुवमुपचरितोऽस्येकयैव प्रणत्या ॥१०२॥

प्रथमं तेषां ( द्विपादीनाम् ), तेषां ( मुक्तादीनाम ), तेषां ( स्वर्णभारादीनाम् ) च स्थाने अर्थात् परिवर्ते एकमात्रेण प्रणामेनैव उपचरितोऽसि सेवितोऽसि । द्विपादीनां स्थाने प्रणामेनैव त्वां परितोषयासीत्यर्थः ॥१२॥

**देव श्रीमाधवक्ष्माधववर ! भवतः प्राज्यराज्याभिषेके**
**के केऽनेकेप्सितार्थप्रकरवितरणान्न द्विजास्तृप्तिमापुः ।**
**यद्दानाऽम्भःप्रसूताः सरित उदभवन् भूरिपद्माऽवतारा-**
**द्भूयःसौरभ्यलुभ्यद्भ्रमरसमशुभाशीर्निनादोऽर्थिसार्थः ॥१०३॥**

हे माधव क्ष्मायाः ( पृथिव्याः ) धवेषु भूपालेषु वर ! प्राज्ये प्रभूतेऽस्मिन् भवतः राज्याभिषेके, अनेकस्य अर्थानां वस्तूनां प्रकरस्य समूहस्य वितरणात् दानात् के द्विजा ब्राह्मणाः तृप्तिं न आपुः, अपितु सर्वे तृप्तिं प्रापुः । येषां ब्राह्मणानां दानसङ्कल्पस्य अम्भोभ्यः जलेभ्यः प्रसूताः ( उत्पन्नाः ) सरितः नद्यः उदभवन् उदपद्यन्त । तासु नदीषु च बहुतरकमलानाम् उद्भवात्, तेषु कमलेषु च बहुतरेण सौरभ्येण लुभ्यन्तो ये भ्रमराः तेषां भ्रमराणाम् आशीर्वादेन समानः शुभाशीर्वादो यस्य ईदृशः तव अर्थिनां समूहोऽस्ति । दानजलेन उत्पन्नासु नदीषु कमलसौगन्ध्येन संतुष्टा भ्रमरा यथा नादरूपम् आशीर्वादं ददति, तथा दानेन संतुष्टाः अर्थिनः तुभ्यमाशीर्वादं ददतीत्याशयः ॥१०३॥

**रे रे चञ्चलचञ्चरीक चतुर स्वैरं वने संचरन्**
**प्रोत्फुल्लाऽमलकोमलप्रसवजाऽऽस्वादा लताः स्वीकुरु ।**
**मीलन्मञ्जुदलां न खेदयतरामान्दोलयन् पद्मिनी-**
**मेतां संकुचतीं विना तरणिभातारुण्यरूपाऽऽगमम् ॥१०४॥**

भ्रमरान्योक्तिमाह—हे भ्रमर ! त्वं चतुरोऽपि साम्प्रतं रसास्वादार्थं चञ्चलोऽसि । अतएव त्वां हितमुपदिशामि । त्वं वने संचरन् प्रोत्फुल्लेभ्यः अमलेभ्यः कोमलेभ्यः प्रसवेभ्यः ( पुष्पेभ्यः ) जातः आस्वादः यासाम् ईदृशीः लताः अङ्गीकुरु । मीलन्ति ( संकुचन्ति, शतृ ) मञ्जूनि दलानि यस्याः ताम् । तरणिभा सूर्यातप एव तारुण्य( यौवन )-संबन्धि रूपम् सौन्दर्यम् तस्य आगमनं प्राप्तिं विना संकुचन्तीं संकोचमवाप्ताम् एतां पद्मिनीम् आन्दोलयन् बलादुपगमेन कम्पयन् सन् मा खेदयतराम् अत्यन्तं मा पीडय । इयं पूर्णविकासं न प्राप्ता, तवोपगममात्रेण संकोचोऽस्याः समुदेतीति साम्प्रतमिमां न खेदयेत्याशयः ॥१०४॥

स्कन्दस्याऽशेषदैतेयककुलविजये याः स्वयंभूर्जगाद
स्वाराज्ये जम्भशत्रोः सुविहितविधिनोवाच वाचस्पतिर्याः ।
ताभिः श्रीमाधवक्ष्माधव ! निगमसरोराजहंसीभिरुच्चै-
र्वैदीभिर्मन्त्रवाग्भिर्धरणिपरिणये शश्वदाशास्महे शम् ॥ १०५ ॥

स्कन्दस्य स्वामिकार्तिकस्य दैत्यसमूहविजये या वैदीः वेदप्रोक्ताः मन्त्रवाचः स्वयंभूः ब्रह्मा जगाद । जम्भशत्रोः जम्भनामकस्य दैत्यस्य वैरिणः इन्द्रस्य स्वःराज्ये स्वर्गराज्य-समये या वाचः बृहस्पतिः विधिपूर्वकम् उवाच, हे माधवभूपाल ! धरणि ( पृथ्वी )-रूपाया महिष्याः परिणये विवाहे निगम( वेद )रूपस्य सरसः राजहंसीभिः ताभिः, वेदसंबन्धिनीभिर्वाग्भिः तव शं कल्याणं आशास्महे ॥१०५

शश्वत्कान्तारसैधाः प्रसृमरपृथुकार्तस्वरैकान्तभाजः
श्रीमुक्तारत्नयुक्ता विरहितवपुषो भूषिताशेषवर्याः ।
देव श्रीमाधवक्ष्माधववर भवतो मित्रलोका विशोका
गेहे भूयोविलासप्रतिभरितकरेणूत्कटद्वारदेशाः ॥ १०६ ॥

[ मित्राऽमित्रयोः श्लेषः ]

हे श्रीमाधव ! भवतः मित्रलोकाः शश्वत् निरन्तरं कान्तानां रमणीनां रस एव एधः संवर्द्धनो येषाम् , निरन्तररमणीविलासपराः । प्रसृमरं सर्वतः प्रसृतं यत् पृथु बहुलं कार्तस्वरं स्वर्णम् तस्य एकान्तभाजः सर्वदा भाजनभूताः । श्रीः राजलक्ष्मीः, मुक्ताः मौक्तिकानि, रत्नानि अन्यानि माणिक्यप्रभृतीनि तैर्युक्ता या वरस्त्रियः ताभिः अविरहितं [ तासां विरह'वियोग'शून्यं ] वपुः येषां ते । भूषिताः आभरणादिभिः मण्डिताः अशेषाः श्रेष्ठाः संबन्धिनः येषां ते । सर्वदा विशोकाः विगतशोकाः । भूयोभिः बहुभिः विलासैः आनन्दैः प्रतिभरितः, करेणुभिः हस्तिनीभिः उत्कटश्च प्रभावशाली च द्वारदेशो येषां तादृशाः सन्ति । भवतः अमित्र( शत्रु )लोकाश्चापि निरन्तरं कान्तारे वने सेधः गमनं ('षिधु गत्याम्') येषां ते । प्रसृमराः पृथुकानां बालकानाम् आर्तस्वराः बुभुक्षादि-पीडया करुणस्वराः येषां तादृशाश्च, तथा एकान्तं शून्यस्थानं भजन्ति तादृशाः । श्रिया राज्यश्रिया मुक्ताः त्यक्ताः । रत्नादियुक्ताभिः स्त्रीभिः विरहितं वियुक्तं वपुः येषां तादृशाः । खट्वाद्यभावात् भुवि भूमौ उषिताः स्थिताः अशेषाः समस्ताः वर्याः श्रेष्ठसम्बन्धिनः येषां तादृशाः । विशोकाः विशेषेण शोकः परिशोचनं येषां ते । गृहे भूयोभिः

बहुभिः विलासैः ( विले आसः आसनं स्थितिः येषां तादृशैः सूपकादिभिः ) प्रतिभरितकाः अतिपूरिताः रेणवः रजांसि धूलयः ताभिः उत्कटः भयंकरः द्वारदेशो येषां तादृशाः सन्ति [ मित्राऽमित्रयोः श्लेषः शाब्दः ] ॥१०६॥

श्रीमाधव क्ष्माधव वक्षसि मामादधासि गुणविज्ञ ।
मामेव विस्मृत इति स्फुरति चरित्रं विचित्रं ते ॥ १०७ ॥

मायाः लक्ष्म्या धवः पतिः माधवः, राजलक्ष्मीपतिरित्यर्थः । माधवो विष्णुश्च मां लक्ष्मीं वक्षसि वहति ततश्च तदभिन्नस्त्वमपि श्रियं वक्षसि वहसि । एवं च मां श्रियं वक्षसि धारयन् कथं मां विस्मरेत् ? ॥१०७॥

किञ्चिन्न्यायेऽप्यधीतं किमपि च पठितं पाणिनिव्याकृतौ मे
किञ्चित्साहित्यसिन्धुप्रसृमरलहरीसङ्गसंसिक्तताऽस्ति ।
सर्वावस्थासहायस्मरणविषयता श्रीयशोदाकुमारे
जाने नैतच्चतुष्कादितरदहमहो नैव जाने न जाने ॥१०८॥

कविः साम्प्रतं विनयेन, भगवद्भावनावशादाध्यात्मिकशान्त्या वा वक्ति—न्याये वैशेषिकशास्त्रे किञ्चिदध्ययनं कृतम् । व्याकृतौ व्याकरणे । साहित्यरूपो यः सिन्धुः समुद्रः ( नदी वा ) तस्य प्रसरणशीलानां लहरीणां सङ्गेन किञ्चित् संसिक्तता आर्द्रतास्ति, साहित्यसमुद्रपरिचयात् स्निग्धहृदयताऽप्यस्ति, इति भावः । समुद्रसदृशस्य प्रसरणशीलानां पर्वताकाराणां लहरीणां सङ्गे समुपगतस्याऽपि किञ्चिदेव संसिक्तता, इति सुस्पष्टं विनय-प्रदर्शनमेव । श्रीयशोदाकुमारे श्रीकृष्णे 'सर्वास्ववस्थासु अयं सहायः' इति स्मरणस्य विषयता । श्रीकृष्ण एव मम सर्वदा ऽवलम्बनम् इति सर्वदा मे स्मरणं तिष्ठतीत्याशयः । पूर्वोक्तात् एतस्मात् चतुष्टयात् इतरत् अन्यद् वस्तु अहं नैव जानामि । जाने, इति त्रिःकथनं दार्ढ्यसूचनाय ॥१०८॥

श्रीमद्राजाधिराजप्रविदितजयसिंहाख्यभूपालवर्यैः
प्रत्यग्रोदग्रदानप्रकरकलनया पालितो लालितोऽस्मि ।
सोहं श्रीमाधवक्ष्माधव जयसिंहाख्यभूपालक्ष्नो !
विस्मर्तुं १नार्हसि त्वं त्वदुदयविजयाशीर्यशोगानशाली ॥१०९॥

१-( हन्त नार्हस्त्वदुदय ), इति पाठान्तरम् ।

श्रीमान् राजाधिराज इति प्रशस्तैः भूपतिवर्यैः । प्रत्यग्राणां प्रतिसमयं नवीनानाम्, उदग्राणाम् उन्नतानां दानानां प्रकरस्य समूहस्य कलनया क्रियया । तव उदयस्य विजयस्य च आशिषां यशसां च गानशाली ( गानकृत्, गानेन शालते शोभते ) सः अहं विस्मर्तुं न अर्हः । त्वं मां विस्मर्तुं न योग्योसीत्यर्थः । 'विस्मर्तुं नार्हसि त्वम्' इति पाठे तु 'अहं त्वदुदयविजयाशीर्यशोगानशाली अस्मि' अतः मां विस्मर्तुं नार्हसि, इति वाक्यभेदेनाऽन्वयः ॥१०९॥

श्रीमद्राजाधिराजे सति समुपकृतं भूरि रामायणेन
प्रारब्धादीश्वरेऽभूत्कविविबुधगुणग्राहितैवोपकर्त्री ।
भाति प्रोच्चैररातिप्रकरहरकरः कोविदानां कवीनां
भाग्यैः श्रीमाधवाख्यो नरपतिरधुनाऽकारि केनोपकारः ? ॥११०॥

श्रीमद्राजाधिराजे अर्थात् श्रीजयसिंहे अम्बावतीराज्यपालके सति रामायणेन भूरि उपकृतम् । एतद्विषये सेयं किंवदन्ती परिवारे प्रसिद्धा यत्—एकदा प्रमोदवार्ता-प्रसङ्गे श्रीजयसिंहेन प्रोक्तं यद् "यथा श्रीकृष्णेन व्रजे शृङ्गारलीला—रासविहारादिकं कृतं तथा श्रीरामचन्द्रेण न कृतम्" । एतदुपरि विनोदमुपगतस्य कविकलानिधेर्मुखान्निःसृतं 'यद् रामचन्द्रस्यापि शृङ्गारलीला—विहारः प्रसिद्धः' । आग्रहमुपगत्य पृष्टं राजाधिराजेन—'ईदृशी रचना कुत्रास्ति' । कलानिधिमहाशयेन उपेक्षया प्रोक्तं 'मन्ये काश्यां दृष्टा' । पुनः किमासीत्, काशीगमनोपयुक्तं व्ययादिकं सादरं प्रदाय तामिमां रचनामानेतुं प्रोक्तोभूत्कलानिधिमहोदयः । किन्तु गृहागतेन कविकलानिधिमहाशयेन असमंजसमालोकितम् । ईदृशी रचना काभूत्कुत्रापि । अस्तु, तद्दिनादारभ्यैव 'रामगीतम्' नाम्नी निर्मितिः प्रारब्धा कलानिधिमहोदयेन । 'रामरासो' इति नाम्नी रचना प्रक्रान्ता इति अन्ये वदन्ति । अस्तु, रामविषयिणी शृङ्गाररचना जयसिंहमहाराजस्य परिचयदृढतायै उपचकारेति सर्वस्य सारः । ईश्वरीसिंहमहाराजे तु कवीनां—पण्डितानां गुणग्राहितैव उपकर्त्री अभूत् । अधुना पण्डित—कवीनां भाग्यैः—अरातीनां वैरिणां प्रकरस्य समूहस्य हरौ (हारकौ) करौ यस्य, ईदृशः माधवाख्यः नरपतिः भाति । अधुना केन उपकारः कृतः ? ॥११०॥

[ त्रिपुष्पहारबन्धः ]

विद्याविभूषण षडानन नव्यभव्यभक्तिप्रथाप्रदशमाशय भूरिभूते ।
पद्मापतेः सरसभावकवर्य—वित्तिवित्तोवदावदनतानतभावनायाः ॥ १११ ॥

देवश्रीजयसिंहधार्मिकपतेः सूनुर्महाभाग्यता–
भूयोभासुरभालभासितविभाप्राभातिकाऽऽभाभरः ।
श्रीमन्माधवसिंह एष विजयी भास्वानिव द्योतते
सद्योजातरुचिप्रभूतकमलामोदैकविस्तारकः ॥११२॥

धार्मिकाणां पत्युः देवश्रीजयसिंहस्य सुतः महाभाग्यतया ( अतिभाग्यशालितया) भूयः अत्यन्तं भासुरं यद् भालं ललाटं तस्य प्रदीप्ता या विभा कान्तिः तया भासितः प्राभातिक्याः प्रातःकालिक्याः आभायाः भरः समूहः यस्य । यस्य ललाटे उदयंगतसूर्यस्य कान्तिसमूहो द्योतते इत्याशयः । भास्वान् सूर्य इव सद्योजातया रुच्या कान्त्या प्रभूतानां कमलामोदानां पद्मसुगन्धानां एकमात्रो विस्तारकः । माधवस्तु रुच्या कान्त्या प्रभूतानां बहुतराणां कमलायाः लक्ष्म्याः मोदानां हर्षाणामतिविस्तारकः । सद्यः प्राप्ता लक्ष्मीः अस्य संसर्गेण प्रमोदते इत्याशयः । अतएव विजयी एषः भास्वानिव प्रकाशते ॥११२

प्राग्धर्मस्तम्भमूलः सपदि सुकृतकृत् कोटिशाखाप्रसारः
स्वच्छन्दानन्दलीलाविकसितसुमनोवासिताऽशेषलोकः ।
प्रोद्यत्कल्याणभूयःफलफलनकलाकौशलाऽनल्पकल्पः
कल्पद्रुः कोऽप्यपूर्वो जगति विजयते केसरी माधवाख्यः ॥११३॥

प्राग्जन्मनि कृतो यो धर्मः स एव स्तम्भः आधारदण्डः मूलं यस्य सः । प्राग् जन्मनि यथा सुकृतम् तथा सपदि वर्तमानकालेऽपि पुण्यकारकः । यस्य वृत्तस्य कोटिशः शाखानां विस्तारः । स्वच्छन्दानन्दस्य ये विलासाः ते एव विकसितानि सुमनांसि (पुष्पाणि), तैः वासितः सुगन्धीकृतः अशेषो लोको येन सः । प्रोद्यन्ति (उदीयमानानि) यानि शुभकर्माणि तेभ्यो बहुतरफलानां फलनस्य विस्तारस्य या कला नैपुणं तस्मिन् अनल्पः कल्पः कल्पना क्रिया यस्य, उत्तमकार्यद्वारा मङ्गलपरिणामेन फलित इत्यर्थः । अतएव केसरी (सिंहः) माधवनामा कोऽपि अपूर्वः कल्पद्रुमोऽस्ति, यस्य मूल–फलादिकमीदृशमस्तीत्यर्थः ॥११३

अद्याऽभूदुत्तरङ्गो मनसि सुमनसां शश्वदानन्दसिन्धुः
स्वान्ताऽधिध्वान्तशान्त्या सपदि दश दिशः सुप्रकाशा ममाऽद्य ।
अद्यैव द्वेषिचक्रप्रकरविघटनं स्वीयरुच्यैव यस्मा–
द्दृष्टः श्रीमत्सवाईनृपतिजलनिधेरुद्गतो माधवेन्दुः ॥१४॥

अद्य सुमनसां ( विदुषाम् ) मनसि आनन्दसागरः उद्गततरङ्गः ( तरङ्गैः उद्वेलः ) अभूत् । अद्य स्वान्तस्य चित्तस्य अधिकीभूतस्य ध्वान्तस्य अन्धकारस्य शान्त्या मम दशदिशः सुप्रकाशाः समभवन् । अद्यैव द्वेषि( वैरि )रूपचक्रवाकानां विघटनं वियोजनं जातम् । यस्मात् सवाईनृपतिश्रीजयसिंहरूपजलनिधेः उदितः माधवसिंहरूपः इन्दुः स्वीयया रुच्या [ कान्त्या इच्छया च ] दृष्टोऽभूत्॥११४

मानस्तोत्रैः प्रसन्नस्थितिरुदयकरीन्द्रादिसंतोषदाना
प्रोत्फुल्लाम्भोजराजन्निजपदसुपमारक्तभक्तौघचेताः ।
गोविन्दोदारकीर्तिस्थगितभुवनभाभासमानः समन्ता–
द्देयादेवाऽखिलर्द्धिः कमनगुणनिधिः सिन्धुजे सन्मुखश्रीः ॥११५

[ पद्यमिदं कर्त्तृकर्मकरणसंप्रदानापादानसंबन्धाधिकरणसंबोधनक्रियापदगुप्तम् ]

शमय शमनभीतिं नाशय स्थापितार्थैः
सकलजननितान्तश्रेयसामेकहेतुः ।
त्वमसि ततनुतश्रीराधिरानन्दिभानु–
र्जय गणपशिवात्मा मुक्तिदानो भवेऽत्र ॥११६॥

[ आदित्यादिपञ्चदेवतानां विषये पद्यमदः ]

सायस्तायत्तयत्तायतिततमतद्यातबोधावधाना
धावाधावातिसातिप्रतिगतिमतयो तन्मतध्वान्तहीनाः ।
दीनाः कीनाशनाशापथयशपथयं जातसातव्रतरुया–
तन्वन्तस्वान्तकान्तद्रुततमनभना मन्युवश्या वयं वः ॥११७॥

[ चतुष्पुष्पहारबन्धः ]

कल्याणवन्तः क्रमदानशोभिता मार्गे परैर्नीतसमस्तभाजनाः ।
भृत्यास्तवैवं विचरन्ति सर्वतः * कंपं त्वदीया दधते च वैरिणः ॥११८॥

सर्वदा शुभकार्यवन्तः, क्रमपूर्वकं यद्दानं वितरणं तेन शोभिताः । माग परैः : अन्यैः भृत्य–भारवाहादिभिः नीतानि प्रापितानि समस्तपात्रादीनि येषाम् (तव भृत्या अपि परिचारकदासादिभिरनुगताश्चलन्ति) । किन्तु तव वैरिणः तव भयात् कम्पं वेपथुं

---

* पल्याणवन्त इत्यादि जायते इत्यर्थः ।

धारयन्ति। किं च ककारस्थाने पकारं धारयन्ति। अर्थात् कल्याणवन्तः इत्यत्र पल्याणवन्तः इति स्यात्। तव वैरिणः कुम्भकार—भारवाहादिककार्यैर्जीवन्ति, येन ते घोटक—गर्द-भादिषु 'पल्याणं' भारवहनसाधनं 'पलाण' इति भाषाप्रसिद्धं सर्वदा सह नयन्ति। ते 'प्रमदानशोभिताः', प्रमदानां कृते न शोभिताः दरिद्रत्वात्ते स्त्रीणामपि मनोहरा न भवन्ति। मार्गे परैः शत्रुभिः [पकारस्थाने ककारकल्पनया,करैः स्वहस्तैरेव नीतानि भोजनादिवस्त्राणि यैस्तादृशाः (भृत्यादीनामभावात् ] ॥ ११८ ॥

यदा काव्यप्रकाशेन चन्द्रालोको विवर्जितः।
किं कुर्मः कं प्रति ब्रूमः संप्रति प्रसृते कलौ ॥११९॥

काव्यानां प्रकाशेन सर्वतः प्रसारेण प्रचारेण चन्द्रस्याऽऽलोकः सर्वतः प्रख्याप्यते क्रियते, यतो हि काव्येषु चन्द्रस्य सर्वाधिकशोभाकारित्वम्। किन्तु कलिकालविडम्बनया काव्यप्रकाशनामकेन ग्रन्थेन चन्द्रालोकस्य जयदेवनिर्मितग्रन्थस्य वर्जनं (खण्डनं) विरोधः क्रियते। यतोहि 'चन्द्रालोके' 'सालंकाररसानेकवृत्तिः वाक् काव्यनामभाक्' इति सालंकारयोः शब्दार्थयोः काव्यत्वं स्वीकृतम्। किन्तु काव्यप्रकाशेन 'अनलंकृती पुनः क्वापि' इति। अतएव चन्द्रालोकेन काव्यप्रकाशस्य खण्डनं 'अङ्गीकरोति यः काव्यं शब्दार्थावनलं-कृती। असौ न मन्यते कस्मादनुष्णमनलं कृती॥ इति कृतम्। अत्र 'काव्यप्रकाशेन चन्द्रालोको विवर्जितः।' इति काव्यप्रकाशस्य चन्द्रालोकेन विरोध एव वक्तव्यः। खण्डनं तु न युज्यते। चन्द्रालोकस्य प्रकाशादुत्तरकालभावित्वात् ॥११९

नन्दकुलोदयशिखरारूढमिनं चक्षुषी न वीक्षेते।
नेक्षेतोद्यन्तमिति प्रचुरतरं वाक्यमनुरुध्य ॥१२०॥

नन्दकुलरूपम् उदयगिरेः शिखरम् आरूढम् इनं सूर्यं प्रातरागतं नायकं श्रीकृष्णं खण्डितायाः चक्षुषी (नेत्रे) यथावत् (उल्लासपूर्वकम्) न वीक्षेते। इत्यस्य उत्तरम्'—नेक्षेतो-द्यन्तमादित्यम्' इति सर्वप्रसिद्धं श्रुतिवाक्यमेव' इत्याशयः। अत्यैव यदा एवमाज्ञप्तं तदा मम सोल्लासदर्शनाऽभावः स्वाभाविक एवेति खण्डितायाः साकूतमुक्तिः ॥१२०

[ ( नेक्षेतोद्यन्तमादित्यमिति ) श्रुतिः। रात्रावन्यत्र विहृत्य प्रातरागतं प्रेयांसं परमप्रेमखण्डिताऽपि खण्डिता वनिता यदा सादरं न ददर्श, तदा तां प्रियसखी प्राह—'अयि विचक्षणे ! तव चक्षुषी कमले, अयं च नन्दकुलोदय-शिखरारूढः सूर्यः, तं दृष्ट्वाऽपि किमिति सोल्लासे न भवतः ?'। तदा तां सा

नायिका उत्तरितवती-'सत्यं कमले, किन्तु वीक्षणक्रियायां तयोश्चक्षुरात्मतापत्तिरे-वेति व्यज्यमाने परिणामालंकारे, चक्षुःकरणकवीक्षणक्रियामेव 'नेक्षेतोद्यन्त-मादित्य'मिति श्रुतिवाक्यार्थानुसारेण न्यषेधदिति व्यज्यमानाभ्याम् उत्तरश्रुति-मात्रोन्नेयप्रश्नात्मकोत्तर-परिणामालंकाराभ्यां सह नायकस्याऽन्यनायिका-संभोगरूपं वस्तु व्यज्यते' । ] ग्रन्थकर्तुष्टिप्पणी ।

श्रीद्वारकेशकेशव केशविशेषस्तुतैकगुणलेश ।
श्रीशारदेशशेषप्रणतसुवेश त्वयि नतिर्मे ॥१२१॥

द्वारकाऽधीशरूप हे केशव (विष्णो !) कं जलं तस्य ईशो वरुणः, विः गरुडः, शेषः, एभिः स्तुतः गुणस्याऽपि लेशो यस्य । यस्य गुणस्य लवमपि वरुणादयः स्तुवन्तीत्यतिशयो द्योत्यते । श्रीशारदा सरस्वती, ईशः शिवः, शेषाः अन्ये च इन्द्रादयो देवाः, तैर्नमस्कृतो वेषः दिव्यरूपं यस्य तत्संबुद्धौ । त्वयि मे प्रणामः ॥ १२१

श्रीमाधवाम्भोनिधिसंप्रभूत-
रत्नानि नित्यं ललिताक्षराणि ।
श्रीसूर्यवंशोदितदीप्तिमन्ति
जगत्समस्तं परिभूषयन्ति ॥१२२॥

[ एकदा माधवद्माधवेन स्वहस्तेनाक्षराणि लिखित्वा यदा मम प्रदर्शितानि तदैवेदं पद्यमुत्पादितम् । ] ग्रन्थकर्तुः टिप्पणी ।

इमानि ललितानि अक्षराणि माधवसिंहरूपसमुद्रात् प्रभूतानि रत्नानि सन्ति यानि सूर्यवंशात् उदितायाः दीप्तेः ( कान्तेः, शोभायाः ) युक्तानि समस्तं जगत् मण्डयन्ति ॥ १२२

धर्मस्तम्भैकमूलः सुललितविलसत्कीर्तिशाखाप्रसारः
प्रोद्यत्कल्याणभृत्पल्लवगणकलितः कामपुष्पौघपूर्णः ।
स्वच्छन्दानन्दवृन्दैः शुभफलफलितः श्रीशभक्त्याश्रयस्थः
श्रीमान् श्रीमाधवाख्यो नृपकुलतिलकः शोभते कल्पशाखी १२३॥

श्रीमाधवसिंहाख्यः एकः कल्पवृक्षोऽस्ति । यस्य धर्मरूपः स्तम्भ एव एकं मूलमस्ति । विलसन् कीर्तिरूपाणां शाखानां प्रसारो विस्तारो यस्य । प्रोद्यन्

प्रोज्जृम्भमाणः शुभफलरूपः यः पत्रसमूहः तेन युक्तः । कामरूपः यः पुष्पौघः कुसुमसमूहः तेन पूर्णः । स्वच्छन्दानि [ केनचित् अपरिभूतानि ] यानि आनन्दवृन्दानि तद्रूपैः शुभफलैः फलितः, आनन्दरूपफल इत्यर्थः । श्रीशस्य भक्तिरेव एकः आश्रयः अवष्टम्भः तेन स्थितः ॥१२३

**श्रीमद्वैकुण्ठशिक्षागुणगणविलसद्दारुकप्रेर्यमाण–**
**श्रीशालिस्यन्दनस्थं करकलितगदापद्मकम्बूग्रचक्रम् ।**
**प्रोन्मीलद्यादवस्त्रीललितवलितदृक्कैरवाऽऽनन्दिचन्द्रं**
**कारुण्याम्भोधिमेकं नवघनरुचिरं द्वारकेशं भजेऽहम् ॥१२४॥**

श्रीमतो वैकुण्ठस्य (दिव्यलोकस्थितस्य भगवतो विष्णोः) शिक्षासंवधिगुणगणैः विलसन् शोभमानो यो दारुकः एतन्नामकः सारथिः तेन प्रेर्यमाणो यः शोभाशाली स्यन्दनो रथः तत्स्थितम् । करेषु कलितानि धारितानि गदा-पद्म-कम्बु (शङ्ख) उग्र (प्रचण्ड) चक्राणि येन तम् । प्रोन्मीलन्ति प्रकर्षेण विकसन्ति यादवक्षत्रियस्त्रीणां ललितवलितानि (मधुरवक्राणि) यानि दृक्(दृष्टि)रूपाणि कैरवाणि (रात्रिविकासीनि कुमुदानि) तेषाम् आनन्ददायकः चन्द्रः, तम् । दयासमुद्रम् । नवीनमेघवद् रुचिरं दृशोः आनन्ददायकं श्रीद्वारकाधीशम् आश्रयामि ॥ १२४

**पार्श्वोद्यद्भीमपुत्री–सुललितकमलाचारुसात्राजिती–**
**स्वच्छन्दानन्दराधाभिधमधुरतरप्रीतिलीलात्मिकाभिः ।**
**नित्यौत्सुक्याद्वधूभिस्तिसृभिरनुगतः श्रीकुरुक्षेत्रसङ्ग–**
**प्रत्यग्रप्रेमदर्शी कलयतु कुशलं भूरिशो द्वारकेशः ॥१२५॥**

पार्श्वे उद्यन्ती उदीयमाना [ आगच्छन्ती ] या भीमपुत्री रुक्मिणी, कमला (लक्ष्मी)-वत् चार्वी या सात्राजिती सत्राजितः पुत्री तथा स्वच्छन्दानन्दयुक्ता या राधानामिका (वधूः), मधुरतरप्रीतिदायकलीलारूपाभिः एताभिः तिसृभिः वधूभिः, उत्कण्ठावशात् अनुगतः (युक्तः) । श्रीकुरुक्षेत्रस्य समागमे प्रत्यग्रस्य नवीनस्य प्रेम्णः दर्शी प्रत्यायकः द्वारकाधीशः कुशलं करोतु ॥१२५

**प्रोद्यत्पीताम्बरश्रीरुचिरतरतडिच्चाकचक्याभिरामः**
**स्वच्छन्दानन्दधारापरिलसितसुधासारसंदोहवर्षी ।**

प्रत्यग्रोदग्रभावप्रमुदितहृदयान् स्वीयभक्तान् मयूरान्
भूयः संतोषयन्वः कलयतु कुशलं श्रीपतिर्द्वारकेशः ॥१२६॥

प्रोद्यतः उदीयमानस्य पीताम्बरस्य या श्रीः शोभा सैव रुचिरतरा तडित् विद्युत्, तस्याः चाकचक्येन चमत्कारेण सुन्दरः। आनन्दधारायां परिलसितो यः सुधासारः अमृतसारभागः तस्य समूहं वर्षति तच्छीलः। प्रत्यग्रेण नवीनेन प्रबलेन भावेन प्रमुदितहृदयान् भक्तरूपान् मयूरान् भूयः अत्यन्तं संतोषयन् प्रसादयन्। वः युष्माकं कुशलं करोतु ॥ १२६

द्वाराधीश त्वदीयान् प्रचुरतरगुणान् कः पुमान् स्तोतुमीशः
श्रौतीनां भारतीनां मुनिवरमनसां चापि दूरे स्थिता ये।
किंतु श्रीविट्ठलेशप्रभुवरगदितप्रेमनिष्ठैकसेवा-
तन्मात्रानन्दमग्नः प्रभवतु सततं कीर्तिगाने जनोऽयम् ॥१२७॥

हे द्वारकाधीश! तव गुणाः श्रौतीनां श्रुति(वेद)संबन्धिनीनां भारतीनां वाणीनाम्, तथा मुनिवराणां मनसां चित्तानां चापि दूरे स्थिताः आगम्याः सन्ति। किन्तु श्रीविट्ठलेशेन (श्रीवल्लभाचार्यपुत्रेण, गोस्वामीतिप्रथितेन) गदिता प्रेमनिष्ठा या एका भगवत्सेवा, तन्मात्राऽऽनन्दे मग्नः (एकतानः) अयं जनः तव कीर्तिगाने समर्थो भवतु इति 'लोट्' लकारेण प्रार्थ्यते ॥ १२७

सच्चेतश्चातकालीसरसतरमनोहारिगम्भीरशब्दः
सोत्साहं भक्तकेकाधरततिभिरलं वीक्षितः सस्पृहाभिः।
उन्मीलन्नीलकान्तिप्रतिलसिततडिच्चारुचञ्चद्दुकूलः
प्रोद्यत्पीयूषधारः स्फुरतु नवघनश्यामलो द्वारकेशः ॥१२८॥

नवीनघनवत् श्यामलो द्वारकेशः (चेतसि) स्फुरतु दीप्यताम्। चेतोरूपायाः चातकपङ्क्तेः सरसतरस्य मनसः हारी आकर्षकः गम्भीरशब्दो यस्य तादृशः। सस्पृहाभिः सोत्कण्ठाभिः भक्तरूपाणां केका(वाणी)धराणां मयूराणां ततिभिः पङ्क्तिभिः वीक्षितः उन्मीलन्त्यां शोभमानायां भगवतो नीलकान्त्यां प्रतिलसिता या तडित् विद्युत् तद्वत् चारुतया चञ्चन् शोभमानो दुकूलः (पीताम्बरम्) यस्य सः। प्रोद्यन्ती उद्गच्छन्ती अमृतधारा (वर्षास्थानीया) यस्य सः ॥१२८

प्रोदञ्चत्प्रावृषेण्यप्रघनघनघटासच्चमत्कारिविद्यु द्-
विद्योतद्योतितान्तर्वलिततरुलतासान्द्रकुञ्जप्रदेशे ।
प्रोन्मीलन्मल्लिवल्लीसरससुरभिते सालिहस्ताब्जलोलां
हिन्दोलान्दोललीलां सततमनुभवन् पातु वो द्वारकेशः ॥१२९॥

प्रोदञ्चन्ती उदीयमाना या प्रावृषेण्या ( प्रावृट्संबन्धिनी ) घनघटा मेघसमूहः तस्मिन् सत् यथा स्यात्तथा चमत्कारिणी विद्युत् , तस्याः विद्योतेन प्रकाशेन द्योतिताभिः चमत्कृताभिः अन्तर्वलिताभिः अभ्यन्तरे निविडाभिः वृक्ष–लताभिः सान्द्रे निबिडे गाढव्याप्ते कुञ्जप्रदेशे । कीदृशे ? विकसन्तीभिः मल्लि('राजवल्ली' 'रायवेल')लताभिः सरसं यथा तथा सुगन्धिते, अलिभिः भ्रमरैः, आलिभिः सखीभिर्वा, सहिते ये हस्ताब्जे हस्तकमले ताभ्यां लोलां चञ्चलां परिचाल्यमानां हिन्दोलायाम् आन्दोलस्य प्रेंखोलनस्य लीलां सततम् अनुभवन् ॥ १२९

उच्चैरुड्डीयमानैः प्रघनघनघटामेदुरै रङ्गधूली–
संदोहैर्माधवीनां करकमलचलैः केलिशोभाभिरामे ।
यन्त्रोद्यन्नीरशोभावति मधुसमये लोलदोलाविलास–
भ्राजिष्णुर्दाक्षिणात्यानिलकलितसुखः पातु वो द्वारकेशः ॥१३०॥

उच्चैः ऊर्ध्वपर्यन्तम् उड्डीयमानैः घनघटावत् मेदुरैः पुष्टैः सान्द्रैः, माधवीनां मधुवनीवासिनीनां माधवसंबन्धिनीनां वा करकमलेभ्यः चलैः परिचालितैः उड्डायितैः रङ्गधूलीनां ('गुलाल') समूहैः क्रीड़ाशोभया अभिरामे मनोहरे । यन्त्रेभ्यः 'पिचकारी' तिख्यातेभ्यः उद्यतः उच्छलतः नीरस्य रङ्गजलस्य शोभाधारके वसन्तसमये । लोलायाः दोलायाः (हिन्दोलायाः) विलासेन राजितः । दाक्षिणात्योऽनिलः मलयपवनः तेन कृतसुखः द्वारकाधीशः ॥ १३०

श्रीमद्वल्लभदेवलालितपदाम्भोजद्वयभ्राजितः
श्रीमद्विट्ठलनाथभावितलसल्लीलाललामाकृतिः ।
तद्वंशोद्भवपुत्रपौत्रनिवहैरद्यापि संसेवितः
श्रीभूशोभनशीलपार्श्वयुगलः श्रीद्वारकेशोऽवतु ॥१३१॥ (अष्टकम)

पुष्टिमार्गीयवैष्णवसंप्रदायाचार्येण लालितेन पदकमलयुगलेन राजितः । श्रीविट्ठलेन तत्पुत्रेण भाविताभिर्लीलाभिः सुन्दराकृतिः । श्रीः (लक्ष्मी), भूः (पृथ्वी) आभ्यां शोभनशीलं पार्श्वयुग्मं यस्य सः ॥ १३१

शेषश्रीद्वारदेशप्रणतपदयुगः केशवश्चारुकेशः
केशस्तुत्यः सुरेशप्रचुरजयकरः क्लेशहृद्ध्यानलेशः ।
दिव्यादेशैकदेशश्रुतिकुलकथिताशेषशेषैकदेशः
स्यादेष द्वारकेशः शुभकृदिह लसद्वेषशोभाविशेषः ॥१३२॥

शेषेण (अनन्तेन) श्रिया च द्वारदेशे एव प्रणतं पदयुगलं यस्य । सुन्दरकेशयुक्तः केशव इति कीर्त्यः ! केशाभ्याम् कः ब्रह्मा, ईशः शिवः, एताभ्यां स्तवनीयः । सुरेशस्य इन्द्रस्य पूर्णजयकरः । सांसारिकक्लेशहारकः ध्यानस्य लेशोऽपि यस्य । दिव्यः आदेशः (प्रेरणावाक्यम्) एकदेशः एकमङ्गं यस्य ईदृशेन श्रुतिकुलेन वेदराशिना कथितः अशेषः संपूर्णः, शेषः प्रलये यः सर्वसंहारकः शिष्यते सः, एकदेशः एकावयवश्च यस्य सः । लसन् शोभमानः वेषस्य शृङ्गारस्य शोभाविशेषो यस्य ईदृशः द्वारकाधीशः शुभकारकः स्यात् भवतु ॥ १३२

यन्मुक्तासुरुचिं बिभर्ति यदलं सन्मानसं गाहते
यद्वत्ते चरणानुरागमपि यद्दत्ते द्विजेभ्यो मुदम् ।
नित्यं निर्मलपक्षधारणविधौ यद्वृत्ततामक्षतां
श्रीमन्माधवसिंह तद्विजयते हंसीव कीर्तिस्तव ॥१३३॥

तव कीर्तिः हंसीव, यतो हि हंसी मुक्तासु मौक्तिकेषु (भोज्येषु) रुचिम् इच्छां धारयति । कीर्तिस्तु मौक्तिकवत् रुचिं कान्तिं बिभर्ति । यच्च अलं यथा तथा उत्तमं मानसाख्यं सरः गाहते विलोडयति, कीर्तिस्तु सतां मानसं चित्तम् आकर्षति । हंसी चरणयोः पदयोः राग रक्तवर्णं धारयति, कीर्तिस्तु 'च,' रणे विजययुद्धे अनुरागं प्रेमाणं धारयति, वीरता–संबन्धात् । हंसी द्विजेभ्यः हंसपक्षिभ्यः मोदं ददाति । कीर्तिः शुभशंसकेभ्यो विद्वद्ब्राह्मणेभ्यः । यच्च–निर्मलयोः पक्षयोः ( गरुतोः ) धारणे अक्षतां पूर्णां वृत्ततां वर्तमानतां धारयति (हंसी) । कीर्तिस्तु–निर्मलस्य निर्दोषस्य पक्षधारणे पक्षपोषणे पूर्णां वर्तमानतां धारयति ॥ १३३

अभूत्प्राज्यं राज्यं जगति तमसां कालमनसां
द्विजाचारभ्रंशो न किल कमलानामधिगमः ।
सदा नक्षत्राणां तनुरुचिरदोषाननुदयो
विधेर्वै वैषम्यादशिशिरकरेऽस्तं गतवति ॥१३४॥

विधातुर्वैषम्यात् ( वामतया ) सूर्येऽस्तं गते सति । जगति कृष्णहृदयानाम अन्धकाराणां पूर्णं राज्यमभूत् । द्विजानाम् ( ब्राह्मणानाम्, पक्षिणां च ) आचारस्य (आचरणस्य, संचारस्य च) भ्रंशः नाशः । कमलानां अधिगमः न, संकुचितत्वात् । किञ्च व्यङ्ग्यपक्षे कमलानां लक्ष्मीणां प्राप्तिः कस्याऽपि न । नक्षत्राणां तारकाणां तनुः दुर्बला रुचिः कान्तिः । अदोषायाः अरात्रेः अनुदयो न । अपितु रात्रेः उदयः । व्यङ्ग्यपक्षे दानसहिताः ये क्षत्राः क्षत्रियाः तेषां दुर्बला रुचिः कान्तिः, दानशौण्डानां क्षत्रियाणां असंमानः इत्याशयः । अदोषाणां निर्दोषाणाम् अनुदयः पराभवः, निर्दोषाः पीड्यन्ते इत्यर्थः । समासोक्तिविधया सूर्यसदृशे जयसिंहादिके कस्मिंश्चन राज्ञि अस्तंगते सति अप्रबन्ध–विप्रदुःख–धनाभाव–क्षत्रियपराभवादयो जायन्ते इति व्यज्यते ॥ १३४

**चञ्चत्कञ्जपरागमण्डलतया चर्मप्रकाण्डं वहन्**
**भास्वद्भृङ्गपरम्परामसिलतामुल्लासयन्निर्भरम् ।**
**अन्तः पान्थजनस्य हन्त महतीं भीतिं समुज्जृम्भय–**
**न्नभ्येति स्मरभूपतेर्मलयजो वीरः समीरः स्फुटम् ॥१३५॥**

मलयजः समीरः कामभूपतेर्वीरः ( सैनिकः ), अभ्येति अभिमुखम् आगच्छति । अतएव–चञ्चन् चलन् कञ्जानां कमलानां परागस्य मण्डलं चक्रं यस्य तत्तया । समीर–द्वारा कमलपरागो मण्डलाकारेण भ्रमति, स एव श्रेष्ठं चर्म 'ढाल' अस्ति, तद्वहन् । भृङ्ग–परम्परां पंक्तिम् खड्गलतां उल्लासयन् चमत्कारयन् । समुज्जृम्भयन् वर्धयन् ॥ १३५ ॥

**न्यक्कृत्य कापि कान्ताकुचतटवसनं चन्दनाऽऽमोदमस्मा–**
**दाकृष्योत्तुङ्गरिङ्गत्कुटिलतरसरिद्भङ्गसंघप्रसङ्गः ।**
**माद्यन्मैलिन्दमालामिलितमधरयन् पङ्कजानामरण्यं**
**मन्दं मन्दं समन्तादयमवनिरुहान्नर्तयन् वाति वायुः ॥१३६॥**

कान्ताकुचतटोपरिगतं वस्त्रं न्यक्कृत्य अपसार्य । अस्मात् कुचतटात् चन्दनगन्धम् आकृष्य । उत्तुङ्गाः उन्नताः रिङ्गन्तः चलन्तः, कुटिलतराः वक्राः ये सरिद्भङ्गाः नदीतरङ्गाः तेषां संघस्य समूहस्य प्रसङ्गः सम्बन्धो यस्य । माद्यन्ती मत्ता या मिलिन्दमाला भ्रमरपंक्तिः, तया मिलितं युक्तं कमलानां वनम् अधरयन् कम्पयन् । मन्दं यथा स्यात्तथा अवनिरुहान् वृक्षान् नर्तयन् कम्पयन् [ ततश्च–चन्दनसम्बन्धेन सुगन्धिः, नदीतरङ्गसंगेन शीतलः, वृक्षाणां नर्तनार्थं रोधनेन मन्दश्चायं वायुरिति व्यज्यते ॥ १३६ ॥

चञ्चच्चाम्पेयजाम्बूनदनिकरसमाकृष्टसंपूर्णसाराः
पद्मश्रीसद्मपातोत्थितमधुपगणारम्भिताऽऽरावधाराः ।
प्रेयःसंभुक्तमुक्तप्रचलितवनितावासआकर्षधुर्या
निर्यान्ति प्रातरेते पवनकपटतः कामदुःस्वामिचौराः ॥१३७

चम्पापुष्परूपं यत् जाम्बूनदं सुवर्णं तत्समूहात् आकृष्टः संपूर्णः सारभागो यैस्ते । ( चौरा गृहगतं सुवर्णादिसारं आहरन्ति ) । पद्मशोभायाः सद्म कमलं, तत्र पातात् उत्थिता ये मधुपगणाः, तैरारम्भिता तद्द्वारा उपक्रान्ता आरावाणां गुञ्जाशब्दानां धारा यैः । पवनैः भ्रमरद्वारा गुञ्जाशब्द आरम्भित इत्याशयः । प्रियतमैः संभुक्ताः तदनन्तरं मुक्ताः त्यक्ताश्च, तत्स्थानात् प्रचलिताः याः स्त्रियः तासां वाससः वस्त्रस्य आकर्षे पटवः । कामरूपस्य दुष्टस्वामिनः ( दस्युश्रेष्ठस्य ) चौराः पवनव्याजेन प्रातर्निर्यान्ति । कामदेवरूपो दस्युः स्वानुगतान् पवनरूपान् चौरान् प्रेषयति । ये हि सुवर्णमाहरन्ति, वस्त्रमाकृष्य पलायन्ते । येषां पश्चाद्भागे भ्रमराः कोलाहलमपि कुर्वन्तीत्याशयः ॥ १३७ ॥

प्राचीनैः प्रोच्चलद्भिः सततमतिजवैरश्ववीरैः समीरै-
र्युक्तो, माद्यद्बलाकावलिललितयुगश्चञ्चलोद्धूतकेतुः ।
अम्भोदव्याजधारी प्रसरदुरुपयोबिन्दुबाणौघवर्षी
कन्दर्पस्यात्यमन्दोऽखिलजगदुपरि प्रेङ्खति स्यन्दनोऽयम् ॥१३८॥

प्राचीनैः प्राग्दिशिभवैः समीरैः पवनैः अतिवेगयुक्तैः अश्वेषु वीरैः ( वीराश्वैरित्याशयः) युक्तः । व्यस्तरूपकम् । समीररूपैः अश्वैर्युक्तः । माद्यन्ती या बलाकाऽवलिः बकपङ्क्तिः सैव ललितं युगम् आकर्षणादण्डो ('जूडा') यस्य सः । चञ्चला(विद्युत्) रूपः उद्धूतः स्फुरितः केतुर्ध्वजो येन । प्रसरन्तो ये उरवः (स्थूलाः) पयोबिन्दवः तद्रूपान् बाणौघान् वर्षति तच्छीलः । सोयम् अम्भोदस्य मिषं धारयन् कंदर्पस्य (कामस्य) अति अमन्दः (उत्तमः, त्वरितगामी) स्यन्दनः संपूर्णस्य जगतः उपरि प्रेङ्खति परिभ्रमति । मेघो नास्ति, बिन्दुरूपान् बाणान् वर्षन् सोयं कामस्य रथोऽस्तीत्याशयः ॥ १३८

ध्राग्वाताधोरणाधोवशितमदझरीविस्फुरद्वारिवर्षा-
स्तर्षाविघातकालीप्रघनघनघनद्घोरघण्टानुघोषाः ।
वल्लद्वेल्लद्बलाकावलिविपुलरदाश्चञ्चलाकेतुमन्तः
पीत्वाऽऽयाताः पयोधेः स्मरधरणिपतेः सिन्धुरा मेघसङ्घाः १३९॥

प्राग्वात(पौरस्त्यपवन)रूपेण आधोरणेन हस्तिपकेन अधो वशीकृताः, तथा मदझरीस्थानापन्ना विस्फुरन्ती परितः प्रसरन्ती वारिवर्षा येषाम्, परितः प्रसरन्ती जलवर्षा नास्ति, अपितु सेयं मेघरूपाणां कुञ्जराणां मदनिर्झरी अस्तीति भावः । तर्पेण तृपया विध्यन्ती पीड्यमाना या चातकाली सैव प्रकर्षेण घनघनेति घनन्तीनां घोरघटानाम् अनुघोषः (नादः) येषां ते । वल्गु मनोहरं यथा स्यात्तथा उद्वेल्लन्ती उपरि उद्गच्छन्ती या बकपङ्क्तिः सैव विपुलौ रदौ दन्तौ येषां ते । चञ्चला (विद्युद्) केतुः ध्वजो येषां ते मेघसमूहाः कामभूपतेः सिन्धुरा हस्तिनः सन्ति, ये जलं पीत्वा पयोधेः समुद्रात् आयाताः सन्तिः ॥ १३९

**श्यामाः पीता वलक्षाः कतिचन हरिताः शोणिमानं वहन्तः**
**प्राग्वातैरश्वपालैरिव करकलिताः सर्वतः संचरन्तः ।**
**अङ्घ्रिप्रत्युप्तलोहद्युतिरुचिरचमत्कारिविद्युत्समूहाः**
**कन्दर्पक्षोणिभर्तुस्तुरगवरघटाः प्रोच्छलन्त्यो विभान्ति ॥१४०॥**

वलक्षाः श्वेताः । शोणिमानं वहन्तः, शोणाः रक्तवर्णाः । अश्वपालैरिव स्थितैः प्राग्वातैः पूर्वपवनैः करे कलिताः हस्ते गृहीताः। ततोपि चञ्चलतया सर्वतः प्रसरन्तः । अङ्घ्रिषु चरणेषु प्रत्युप्तस्य जटितस्य लोहस्य द्युतिवत् रुचिरचमत्कारकारी विद्युत्समूहो येषां ते । सुन्दरचमत्कारी तडित्समूहो नास्ति, चरणेषु जटितस्य लोह'नालस्य' सेयं द्युतीरस्तीत्याशयः । कन्दर्पभूपतेः प्रोच्छलन्त्यः एताः तुरगवराणां घटाः समूहाः विलसन्ति । एते मेघाः श्रेष्ठाश्वसमूहाः सन्ति । मेघान् आरोपविषयान् अनुक्त्वा (निगीर्य) तुरगवरघटा इति विषयिमात्रनिर्देशात् साध्यवसाना ॥ १४०

**आरूढप्राक्समीरप्रबलभुजसमाकृष्टमाद्यद्बलाका-**
**वल्गद्वल्गानुबन्धाः सरलखुरसमाक्रान्तभूम्यन्तरिक्षाः ।**
**आविर्भूतेन्द्रचापप्रसृतमणिमयाऽतुल्यपल्याणवन्तः**
**कामक्षोणीन्द्रसैन्या इव दधति रुचिं वारिवाहाऽच्छवाहाः ॥१४१॥**

आरूढः पूर्वपवनः (घोटकस्थानापन्नः) यैः ते । एवम् प्रबलभुजेन समाकृष्टा माद्यन्ती बलाका (बकपङ्क्तिः) एव वल्गन्ती (चलन्ती) वल्गा मुखरज्जुः 'लगाम', तस्याः अनुबन्धः सबन्धो येषां ते । सरलैः खुरैः समाक्रान्ताः भूमेः अन्तरिक्षस्य च भागाः यैस्ते । आविर्भूतः यः इन्द्रचापः (इन्द्रधनुः), स एव प्रसृतः व्याप्तः मणिमयः अनुपमः

पल्याणः पृष्ठासनं 'जीन' येषां ते। एते वारिवाह(मेघ)रूपा अच्छा उत्तमा वाहाः घोटकाः, कामदेवरूपस्य क्षोणीन्द्रस्य (राज्ञः) सैनिका इव शोभां धारयन्ति ॥१४१॥

**उच्चैराच्छादयत्युद्गतसलिलभरैः प्लावयन् सर्वदेशान्**
**खद्योतैरिन्द्रगोपैर्विविधमणिमयः स्वर्णपक्षैश्च कीटैः।**
**वर्षाव्याजप्रकर्षात्प्रसृमरचपलावाडवाग्निप्रकाशः**
**प्रोद्वेलोऽयं पयोधिः परिणतविभवो मानिनीमानभूमिः ॥१४२॥**

मानिनीनां मानभूमिः [अर्थात् मानकारकः], पूर्णवैभवशाली, वर्षाणां [प्रावृड्ऋतोः] छलातिशयात् प्रोद्वेलः (वेलाम् मर्यादामप्युल्लङ्घयन्) अयं पयोधिः समुद्रोऽस्ति। अयं वर्षासमयो नास्ति सोयं समुद्रोस्तीत्याशयः। तथाहि–उच्चैः अत्यन्तम् उद्गतैः (उपरि उत्थितैः) सलिलभरैः सर्वदेशान् प्लावयन् जलमयान् कुर्वन् आच्छादयति आवृणोति। खद्योतैः, इन्द्रगोपैः वर्षाकीटैः ('सावन की डोकरी'), स्वर्णवर्णपक्षयुक्तैः कीटैश्च विविधवर्णमणियुक्तः, तथा चमत्कारशालित्वात्। प्रसृमरः सर्वत्र प्रसरणशीलः चपल(ा विद्युद्)रूपः बाडवाग्निप्रकाशः यस्य। विद्युत्प्रकाशो नास्ति सोयं बाडवानलस्य प्रकाशोऽस्तीति वक्तव्यसारः। ततश्च वर्षामिषात् सोयं समुद्रोस्तीति समर्थनम् ॥१४२॥

**सुधाधारास्वादोज्झितशशिकलाशीतलरसं**
**सुरैर्मानाधानान्मनुजततिभिः पीतमनिशम्।**
**भुजङ्गानामङ्गे गरलभवसंतापहरणं**
**त्रिलोक्यां संव्याप्तं प्रजयति सदा राघवयशः ॥१४३॥**

त्रिलोक्यां सर्वतो व्याप्तं राघवस्य यशः प्रकर्षेण जयति। तथाहि–सुधाधाराणाम् आस्वादेन उज्झितः त्यक्तः शशिकलानामपि शीतलो रसो यस्मिन् यथा स्यात्तथा सुरैः देवैः पीतम्। शुक्लपक्षे चन्द्रकिरणानां रसं विहाय राघवयश एव शैत्यातिशयाद्देवैः पीतमित्याशयः। मानस्य आदरस्य आधानात् स्थापनात् मनुजसमूहैरपि च पीतम्। एवं तद् यशः सर्पाणां शरीरे विषसंजातस्य संतापस्य हारकम्, अतएव अमृतगुणधारकं राघवयशः त्रिजगति व्याप्तम्। शशिकलारसपराभवात् आकाशे, मनुष्यसमूह–कर्तृकपानात् पृथिव्याम्, भुजङ्गानां विषतापहरणात्पाताले, इति त्रिलोकी व्याप्ता ॥१४३॥

सुधासाराऽऽसारानवरतविसाराऽवसरदं
पयःपारावारानुकृति सविहारामलखगम् ।
स्फुरन्मुक्ताहाराऽभरणसुरदारातिरुचिरं
सुखोच्चारादाराज्जयति हरिनारायणयशः ॥१४४॥

हरिनारायणस्य यशः सुधासारस्य यः आसारः धारासंपातः तस्यापि निरन्तरविसारे परित्यागे अवसरदायकम् अस्ति । सुधासारस्य निरन्तरप्रपातमपि परित्यज्य हरिनारायणयशः संश्रयन्ते इत्यर्थः । पुनः तद्यशः पयसो दुग्धस्य यः पारावारः समुद्रः तस्यानुकरणकारकम् । सविहाराः विहारेण प्रमोदक्रीडया सहिताः उत्तमाः खगाः हंसादयो यस्मिन् । स्फुरत् देदीप्यमानं मौक्तिकहाररूपम् आभरणं येषां, तादृशाः ये सुरदाराः देवाङ्गनाः [दाराः पुंसि], तेभ्योपि अतिरुचिरम् मनोहारकम् । कथमेतत् ? यतो हि सुखोच्चारात् । इदं यशः सुख-पूर्वकं जनैर्गीयते । अतएव पूर्वोक्तपदार्थेभ्योपि तदिदं यशः आरात् दूरतः जयतीत्यर्थः । 'आराद्दूरसमीपयोः' ॥ १४४ ॥

इहाधीतं स्फीतं त्रिदिवमुपनीतं मुनिजनै-
र्यशोगीतं गीतं सितमधुरशीतं सुरगणैः ।
सदा तस्योच्चारादजनि सुखसाराय धिषणा
सुधाधारा नाराधयति हरिनारायण विभो ॥१४५॥

हे हरिनारायण ! भवतो यशोगीतं स्फीतं विशदं मुनिजनैः इह (भूमौ) अधीतम् । तथा त्रिदिवं स्वर्गमुपनीतं सितं श्वेतं, मधुरं, शीतं च तद् ( यशोगीतं ) सुरगणैर्गीतम् । तस्य गीतस्य उच्चारणात् ( उच्चारयिताम् ) धिषणा बुद्धिः सारभूतसुखाय अजनि जाता । तान् गायकान् सुधाधारापि नाराधयति न प्रीणयति ॥ १४५ ॥

सदाचाराचाराकलितमविचारादतितरां
धराधर्माधारावधृतधृतिधारार्पितधियाम् ।
सुधासारासारास्वदनजिततारापतिमहो
महोदारानाराज्जयति हरिनारायणयशः ॥ १४६ ॥

सताम् ये आचाराः तेषाम् आचरणैः आकलितं युक्तम् । धर्मस्य आधारेण अव-धृतायां धृति( धैर्य )धारायाम् अर्पिता धीः यैस्तेषाम् । धरायाः पृथिव्याः धर्माधारेण

धैर्यधारकाणां सज्जनानामित्याशयः। सुधायाः अमृतस्य सारभागस्य यः आसारः ( धाराप्रवाहः ) तस्य आस्वदनेन जितं तारापसेः चन्द्रस्य महः प्रकाशो येन तत्। अमृतसारभागस्वाददायितया चन्द्रप्रकाशस्यापि तद् यशो विजित्वरमियाशयः। ईदृशं हरिनारायणस्य यशः भूमौ अत्यन्तोदारतया प्रसिद्धानपि पुरुषान् दूरादेव जयति ॥ १४६ ॥

यावन्तो वनवासिनः खलु मृगास्तेषां महीयान् गज–
स्तस्मादप्यधिकं मृगेन्द्रमखिलो लोकः सदा मन्यते।
किन्तु द्वावपि यत्र मूल्यकरणे नीतौ न तत्राऽपरं
कोऽप्यङ्गीकुरुते, करी पुनरसौ राज्ञां वरैरादृतः ॥१४७॥

मृगाः अरण्यवासिनः श्वापदाः तेषां मध्ये गजः महीयान् अतिशयेन महान्। गजापेक्षयाऽपि सर्वो लोकः मृगेन्द्रं सिंहम् अधिकं मन्यते। मूल्यकरणे मूल्यनिर्धारणार्थं यस्मिन् स्थाने गज–सिंहौ द्वावपि नीयेते तत्र अपरं द्वितीयं ( सिंहम् ) कोऽपि न अङ्गीकुरुते। पूर्वः करी गजस्तु राजश्रेष्ठैरपि आदृतः संमानेन स्वावासे स्थापितः ॥ १४७ ॥

दृष्ट्वा लीनाखिलार्थः समयमयमहीनावबद्धस्वशृङ्गः
पीनापीनामहीनामुदधिचरमहीनावमुच्चैर्दधौ यः।
वीनामीशे कवीनामथ वचसि नवीनाच्छकीर्तिः स देवो
दीनान् कीनाशभीनाशननिपुणमतिः पातु मीनावतारः ॥१४८॥

जलप्रलयसमये लीनाः अखिलाः समग्राः अर्थाः द्रव्याणि यस्य सः। अहीनां सर्पाणाम् इनः श्रेष्ठो यः शेषः तेन अवबद्धं स्वशृङ्गं यस्य सः। शेषरूपया रज्ज्वा पृथिवीरूपा नौः मत्स्यावतारस्य भगवतः शृङ्गायिते पृष्ठभागे बद्धेति पुराणकथा। ईदृशः अयं मीनावतारः समयं प्रलयावसरं दृष्ट्वा। पीनम् आपीनं अधोभागो यस्याः 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। अतएव 'अहीनां हीनेतरां श्रेष्ठाम्। उदधि( प्रलयसमुद्र )चराम् मही(पृथ्वी) रूपां नावम् नौकाम् यः उच्चैर्दधौ धारयामास। जलमयतादशायां मीनावतारस्य शृङ्गसदृशे स्कन्धे महीरूपा नौका शेषं रज्जुं कृत्वा न्यबध्यत, इति पुराणकथा। वीनाम् पक्षिणाम् ईशे गरुडे, अथ कवीनां वचसि वाण्याम्। स्तावकस्य गरुडस्य वाण्यां, कवीनां स्तुतिषु च नव–नवा स्वच्छा कीर्तिर्यस्य सः। कीनाशस्य यमस्य भी( भय )नाशने निपुणमतिः। यमराजभयनिवारकः स मीनावतारः मादृशान् दीनान् पापभीत्या दयापात्रभूतान् पातु ॥ १४८ ॥

कम्बावुग्राऽविलम्बारवभृति समरेष्वेत्य संबाधिताऽरिः
संबाधश्यामलम्बाऽलकवलितमुखः संततं बालकेलिः।
अम्बाचक्षुःकदम्बायितबहलबलो भूरिशम्बाऽस्त्रदर्प-
स्तम्बाक्रीडौघजम्बालजविगतिहरः स प्रलम्बारिरव्यात् ॥१४९॥

उग्रम् अविलम्बम् ( शीघ्रजातम् ), आरवं शब्दं बिभर्ति तादृशे, उग्राऽविलम्बाऽऽरवभृति, प्रचण्ड-तूर्णनादकारिणि कम्बौ शङ्खे वाद्यमाने सति। समरेषु युद्धेषु आगत्य, संबाधित( पराजित )शत्रुः। संबाधाः निविडाः घनीभूताः श्यामाः लम्बाश्च ये अलकाः केशाः तैरावृतमुखः। युद्धेष्वपि बालक्रीडावत् निरायासं प्रवर्तमानः। अम्बाचक्षुषोः मातुर्नेत्रयोः कृते कदम्बवृक्षायितं बहलं बलं वीर्यं सैन्यं वा यस्य सः। बलं विलोक्य मातृनेत्रे प्रफुल्ले भवत इत्याशयः। शम्बः वज्रम् अस्त्रं यस्य सः शम्बास्त्रः इन्द्रः। भूरिः यः शम्बास्त्रस्य दर्पः स एव स्तम्बाक्रीडौघः अर्थात् गुल्मानाम् (प्रकाण्डरहितानां बालवृक्षाणाम् ) आक्रीडौघः उद्यानसमूहः, तद्रूपे जम्बाले कर्दमे जाताया विगतेः दुर्गतेः हारकः। इन्द्राभिमानेन जाताया लोकपीडाया हारक इत्याशयः। ईदृशः प्रलम्बासुरस्य शत्रुः बलरामः श्रीकृष्णो वा नः अव्यात् पायात् ॥ १४९ ॥

दारान् रक्षतु दारमध्यलसितो मोदः प्रमोदप्रद-
स्तद्वत्पातु सुतान् सुतान्तरगतो ज्ञानाकृतिर्ज्ञानदः।
रातूच्चै रतिमध्यगो निजरतिं मापः स मापालको
मावस्थः कुरुतामधर्मदलनं धर्माणि धर्मादिमः ॥१५०॥
[ दामोदरः। सुज्ञानतः। रमाहृतिः। माधवः। इति गुप्तार्थेनान्तर्लापश्लेषः ]

दा र इति अक्षरद्वयमध्ये लसितः आनन्ददायको 'मोदः'। ततश्च 'दामोदरः' इति संपन्नम्। दामोदरः दारान् रक्षतु। सु त इति अक्षरमध्यगतः ज्ञानदायकः 'ज्ञान' इत्याकारकः। ततः 'सुज्ञानतः', सुन्दरेण 'ज्ञा' ज्ञानेन नतः नम्रः, ज्ञानप्रदो बुद्धादिर्भगवान् सुतान् रक्षतु। 'र ति' इति अक्षरद्वयमध्ये गतः 'मापः' कीदृशः सः ? मापालकः मायाः लक्ष्म्याः पालकः। ततश्च रति इति मध्ये 'माप' शब्दसंनिवेशे रमापतिः इति जातम्। सः निजरतिं निजप्रीतिं रातु ददातु। रमापतिः निजभक्तिं ददातु इत्यर्थः। 'मा व' इत्यत्र स्थः स्थितः, धर्मादिमः धर्मस्य आदिमः वर्णः 'धः', ततश्च 'माधवः' इति निष्पन्नम्। स माधवः अधर्मस्य दलनं नाशनं कुरुताम्। धर्माणि च कुरुताम् प्रसारयतु। ततश्च सेयमन्तर्लापिका प्रहेलिका ॥ १५० ॥

[ पद्मबन्धः ] मारसारसमासेव्या व्यासेमानेहतानुमा ।
मानुता परमायामा मायामानातिसारमा ॥१५१॥

काधियास्यां स कामाननमाकामादिमादिका ।
कादिमान्याभिकाम्या सा साम्याकाराप्रियाधिका ॥१५२॥

प्रकृतिरमरभाषा शब्दशास्त्रेण सिद्धा
प्रकृतिमनुसरेत्तत् प्राकृतं गीः शिशूक्तिः ।
तदुभयमनुसृत्य प्रोत्थिता वैखरी सा
विविधजनमुखोत्था लोकभाषेति सोक्ता ॥१५३॥

शब्द( व्याकरण )शास्त्रेण सिद्धा देववाणी ( संस्कृतम् ) प्रकृतिः प्रकृतिसिद्धा भाषा । प्रकृतिं संस्कृतम् अनुसरति, अर्थात् संस्कृतस्यैव कालक्रमेण अशक्त्यादिना, देश-कालप्रभावात् कण्ठताल्वाद्यभिघातविकारेण 'प्राकृत'नाम्नी गीः वाणी निष्पन्ना, या संस्कृतस्याग्रे शिशूनाम् उक्तिः । उक्तं च भामहेन 'प्राकृतप्रकाशे'—"प्रकृतिः संस्कृतम्, तत आगतं प्राकृतम्" अर्थात् संस्कृतं प्रकृतिं स्वस्वरूपम् आधारं कृत्वा, निष्पन्नं प्राकृतम् । संस्कृत-प्राकृतेति उभयं द्वयम् अनुसृत्य या प्रोत्था निष्पन्ना । अर्थात् संस्कृतात् कालक्रमेण उच्चारणादिविकारे सति प्राकृतम् । काले याति प्राकृतस्यापि शनैः शनैः अपभ्रंशजनित-स्वरूपनिष्पत्त्या तत्तत्प्रान्तीयभाषास्वरूपेण सेयं ब्रजभाषा, तत्रापि देशकालप्रभावात् सेयं लोकभाषा हिन्द्यादिर्निष्पन्नेति संक्षिप्ताशयः॥ १५३ ॥

चतुरग्निचयनकारी पञ्चाधिकशतशुभाश्वमेधकरः ।
श्रीसर्वमेधयाजी जयतु सवाईमहीपतिः सम्राट् ॥१५४॥

येन चत्वारश्चयनयागाः कृताः । पञ्चोत्तरं शतं च अश्वमेधाः कृताः । तदनन्तरं सर्वयजनात्मकं सर्वमेधं विहितवान् । अयं हि सर्वमेधश्चतुस्त्रिंशद्दिनसाध्यः सोमयागः । प्रथमं दिनमग्निष्टोमसंस्थम् । ततो दिनत्रये इन्द्रस्तुत्, सूर्यस्तुत्, वैश्वदेवस्तुत् इति उक्थ्यसंस्थाः । ततो महाव्रतमहः इत्यादि मीमांसातोऽभिज्ञेयम् । जयसिंहमहाराजस्य सम्राट्त्वम् 'ईश्वरविलास'महाकाव्येऽपि अनेनैव रूपेण प्रोक्तं प्रकृतग्रन्थकारेण । यथा हि द्वितीयसर्गस्थ ९—१० श्लोकौ—

"तस्यात्मजः कीर्तितपुण्यकर्मा श्रीमत्सवाईजयसिंहवर्मा ।
बभूव सम्राट् चतुरग्निचिद्यः पञ्चाधिकप्राप्तशताश्वमेधः ॥
चक्रे स सर्वयजनात्मकसर्वमेधं दध्रे पुनः पुरुषमेधविधेर्विधानम् ।
सोमांश्चकार शतशः प्रतिवर्षमेव पूर्णस्य धर्मजलधेः परपारमाप ॥"

एवं यागकरणे सम्राट् इति प्रख्यायते । अत्रत्यो विशेषो जिज्ञासुभिः 'ईश्वरविलास' महाकाव्यात् , तट्टीका'विलासिनी'तश्च बोध्यः ॥१५४॥

राधारदच्छदकपोलदृगन्तविम्ब–
पूर्णेन्दुरङ्कुरुचिचुम्बनलालसो यः ।
गोपीकुलाऽऽकलितकेलिकलाकलाङ्गः
कौलव्रतक्षतजगद्युवतिः स वोऽव्यात् ॥१५५॥

राधाया रदच्छदः अधरः, कपोलौ, दृगन्तविम्बश्च एते कीदृशाः पूर्णेन्दु–रङ्कुरुचयः । अर्थात् मुखरूपे पूर्णचन्द्रे रंकुः लाञ्छनरूपो मृगः तत्कान्तिः, सकज्जलो नेत्रप्रान्तः अस्ति । अयं श्रीकृष्णः राधामुखे तादृशरंकुकान्तिचुम्बने लालसोऽस्ति । किञ्च गोपीकुलेन ( समूहेन ) आकलिता युक्ता या केलिकला क्रीडाविनोदः, तेन कलानि सुन्दराणि अङ्गानि यस्य सः । निजकुलव्रतात् नियमात् क्षताः दूरीकृताः जगतो युवतयः व्रजाङ्गनाः येन, ईदृशः सः भगवान् श्रीकृष्णः वः अव्यात् रक्षतात् । गोपीनां स्वं स्वं कुलव्रतं तासां तत्तन्मानुषसंबन्धित्वात् लौकिकमासीत् । किन्तु अनुगृहीतानां तासां लौकिकं संबन्धं दूरीकृत्य भगवान् स्वेन संबन्धमलौकिकं स्थापितवान् । ततश्च ताः नित्यलीलायां स्वीकृतवानिति भगवतोऽनुग्रहातिशयः सूच्यते । उक्तं च श्रीमद्भागवते– "या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥" इत्यादि ॥ १५५ ॥

हर्षादौ विहितो, यशोभरसरिच्चारित्रकारित्वयो–
र्मध्ये संकलितः, कवित्वकलना कौतूहलोपान्त्यगः ।
यः संसारविसारसारविसरस्यैकोऽवधिः संस्तुतः
सोयं भाति गुणौघरञ्जितचतुर्वर्णप्रमोदप्रदः ॥१५६॥[हरिहर इति]

हर्षस्य आदौ को विदितः ? 'हः' । यशोभरसरित् , चारित्र, कारित्वयोः मध्ये संकलितः ( स्थितः ) कः ? 'रि' । कवित्वकलनाकौतूहलस्य उपान्त्ये अर्थात् अन्त्यस्य

समीपगतः कः ? [ अन्त्ये लः, तत्समीपे 'ह' ]। 'संसार, विसार, सार, विसर, एतेषाम् अवधिः अन्त्यः कः ? 'रः'। ततश्च सर्वसंकलने 'हरिहर' इति निष्पद्यते।

अर्थश्चापि–हर्षादौ मङ्गलभावे हरिहर इति भगवन्नामैव सहायकम्। ततश्च हर्षादिवस्तुनिचये भगवान् विदितः। यशोभरसरित्–चारित्रकारिता, एतयोर्मध्येऽपि भगवान् हरिहरः संकलितः स्थितः। भगवदनुग्रहं विना न यशोराशिर्लभ्यते, न च चारित्र्यनिर्माणं भवति। तथा कवित्वकलना( निर्माण )कौतुकस्यापि हरिहरभगवानेव उपान्त्यगः। संसारविसार(त्याग)स्य सारविसरः सारभूतः कः, अर्थात् संसारत्यागावसरे सारभूतः कः ? हरिहरभगवानेव। सोयं हरिहरः गुणसमूहैः रञ्जितः शोभितः, ब्राह्मण-क्षत्रियादिचतुर्वर्णानां प्रमोददायकश्च। किञ्च चतुर्भिर्वर्णैः ( अक्षरैः ) स्मरतां कीर्तयतां प्रमोदप्रदः हरिहर एव भाति। इति साधारणतया अर्थः॥ १५६॥

[भाषासंस्कृतयोः श्लेषः]

**सातदिनाकरलीनमहा गिरजापरमोरुकुतूहलकारी**
**कण्ठहराहरकीलकुटी तनुनीलमसी रुचिरञ्जनकारी।**
**कामदयारिहितो वरगोपतियान उदारकलानिधिभारी**
**भावनिजाचित सर्वसुराधिक एतु मनो नितरामहिहारी॥१५७॥**

अयं भाषा–संस्कृतयोर्यथा श्लेषः, तथा वर्णनीयविषयेऽपि श्लेषः। अर्थात् हिन्दी-भाषायां वर्णनीयः श्रीकृष्णचन्द्रः, संस्कृते तु भगवान् शङ्करः। दृश्यतां व्रजभाषाऽर्थाऽऽनु-कूल्येन पदच्छेदादिभिर्विलिख्यमानं तदिदं पद्यम्—

सातदिनां कर लीन महागिरि जा पर मोरु कुतूहलधारी
कण्ठ हरा हर कीलकुटी, तनु नीलमसी रुचि रंजनकारी।
कामद, यारहितो वर गोपतियान उदार कलानिधि भारी
भावनि जाचित सर्वसु राधिक ए तुम नोनित रामहि हारी॥

( "सप्तदिनावधि करे येन महागिरिः ( गोवर्द्धनः ) गृहीतः, यदुपरि मम कुतूहलं दधाति। कण्ठे हारः (वनमाला), कीलकुट्याः दावानलजालस्य यो हर अर्थात् हारकः, वह्नेर्द्र-योर्ज्वालकीलौ'। यस्य तनुः नीलमणिवत् स्वकान्त्या रञ्जनकारिणी। कामदः (अभीष्टमनो-रथदः, अथवा कामोत्पादकः ), मित्रेषु हितः, (वर) कोष्ठकश्रेष्ठासु (गोपतियान ) गोपपत्नीषु

उदार', श्रेष्ठश्च । कामकलानां निधिः । भावैः यस्य चित्ते सर्वस्वं राधिकाऽस्ति । अयि त्वं नवनीतस्य, (महि) दध्नश्च हारी असि' एवंप्रायोव्रजभाषायामर्थः ] संस्कृते तु—

सातदिनानां सुखदिनानां आकर' समूहे लीनं महस्तेजो यस्य, सातदिनाऽऽकरलीन-महाः। अर्थात् यस्य तेजः (प्रभावः) सुखदिनकारी, कालं शुभं निर्मातीति यावत् । 'शर्मसातसुखानि च' । यः शिवः गिरिजायाः परमोरु ( महत् ) कुतूहलं धरति । कण्ठे या हला-हलस्य कीलकुटी ज्वालरेखा, तया तनुः सूक्ष्मा या नीलमषी( स्याही )वत् रुचिः, तया रञ्जनकारी । कामोपरि दयारहितः । वरः श्रेष्ठो यो गोपतिर्नन्दीश्वरः स यानं यस्य । उदारं निष्कलङ्कं कलानिधिं चन्द्रं विभर्ति सः । भावेन निजं स्वयम् आचिताः एकत्र स्थापिताः ये सर्वे सुराः तेषु अधिकः । ईदृशः अहिहारी ( सर्पभूषणः ) नितरां सर्वदा मनः एतु अधितिष्ठतु–अयमर्थः स्यात् ] ॥१५७ ॥

समधिकरवाणि भक्तौ भक्तौघकृतानि सरसमधिकरवाणि ।
करवाणि कीर्तनानि प्रसीद कृष्णस्य शुभरसाकरवाणि ॥१५८॥

कृष्णस्य कीर्तनानि कीदृशानि ? भक्तौ समधिक–रवाणि, समधिको रवः नादो येषु तानि, अर्थात् उच्चैः स्वरेण कलितानि । भक्तौघेन कृतानि कीर्तनानि अहम् सरसं सानन्दं यथा स्यात्तथा अधिकरवाणि अधिकृतानि करोमि । स्वाधिकारभुक्तानि करवाणि, इति प्रार्थना । 'प्रार्थनायां लोट्' । हे शुभरसानाम् आनन्दानाम् आकर(खनि)भूते हे वाणि ! त्वं प्रसीद । अहं कृष्णस्य कीर्तनानि ( नामसंकीर्तनानि ) करवाणि, इति प्रसन्नायाः त्वत्तः प्रार्थये ॥ १५८ ॥

गोविन्द श्रीलगोपीजनहृदयपरानन्ददो वल्लभस्त्वं
गोपेन्द्र क्ष्मीललोपी घनसदयतरामन्दगो मल्लभश्च ।
गोविन्द ह्रीलरोपी विलसदयनरानन्दको म भक्ता
गोपेन्द्र श्रीलनोपीडयमदयवराश्चर्यदो वल्लभश्रीः

[ अयं च कामधेनुबन्धः ]

नवनीलघनं घनतापतरं भज भावभरैरभिरामतरम् ।
भवभीलहरं जनजापभरं व्रजदावचरैरभिकामवरम्
सवशीलधनं सनलापकरं गजरावहरं हरधाम परम् ॥
जवलीलवनं वनभायधरं जयधावधरं दरयाम सरम् ॥

[ अयमपि कामधेनुबन्धः ]

ललितालललितालिशतावलिता गुणिताकलिताकलितासुलता ।
सुहितासुहितावृषतापिसुता निहिता हृदि तापमुता धुनुतात् ॥

[ अयं च कपाटादिबन्धः ]

वरतरनरवरकरसरखरतर करवारधारपरदरभारः ।
स्थिरतरमतिरतिसीमा श्रीमाधव भव विभाविभासितसातः ॥

[ अयं कपाटहारादिबन्धः ]

वरतरनरवरकरसरखरतरकरवारधारपरदरभारः ।
स्थिरतरमतिगतिरतिसीम श्रीमधुमथनजनमान जयनमयकायः ॥

[ अयं चतुष्पुष्पहारबन्धः ]

जागृहि जागृहि वीरवर्य वृन्दारकवन्दित ।
जागृहि जागृहि धीर धरणिकृतधर्मानन्दित ।
जागृहि जागृहि विष्णुयशोवंशालयमण्डन ।
जागृहि जागृहि देवभागहरघनवनदण्डन ।
जागृहि जनलोचनजातसुख जागृहि जय लक्ष्मीनिधे ।
जागृहि माहितनिजविभव कल्किरूप गुणवारिधे ॥१६४॥

वृन्दारकैः देवैः वन्दित ! धरण्या पृथिव्या कृतेन धर्मेण आनन्दित ! विष्णुयशोनामकस्य पितुः कुलभुवनस्य मण्डनभूत ! देवानां भागहारका ये दैत्यादयः ते एव घनं ( निविडं ) वनम् तस्य दण्डदायक ! [ दण्डयतीति दण्डनः कर्तरि ल्युः ] । लोचनजातेः । कृते सुख ! अथवा लोचनानां कृते जातं सुखं यस्मात् तत्संबुद्धौ । लोचनसुखकारक, इत्याशयः । मायाः लक्ष्म्याः हिते निजो विभवो यस्य तत्संबुद्धौ । लक्ष्मीलीलार्थं सर्ववैभवशालीत्यर्थः । जागरणार्थं मङ्गलगीतिः ॥ १६४ ॥

जय जागृहि वीर जयैकनिधे ! जय जागृहि सद्गुणवारिनिधे !
जय जागृहि जातशुभैकविधे । जय जागृहि संततनम्रविधे ॥१६५॥

जयस्य अद्वितीयनिधानभूत ! जाताः शुभैके शुभमात्राः विधयः विधानानि कार्याणि यस्य यस्माद् वा तत्संबुद्धौ । सृष्टेः कृते मङ्गलकार्यकारिन्नित्याशयः । संततं नम्रो विधिः विधाता यस्मात्, विधाताऽपि त्वां नमतीत्याशयः ॥ १६५ ॥

सुचि विष्णुयशोभुवनाभरणम् । कमनीयमशेषमनोहरणम् ।
न भवन्तमुपेत्य भवे विहरे । जय जागृहि जागृहि कल्किहरे ॥१६६॥

विष्णुयशसः तन्नामकस्य पितुः भुवनमात्रे आभरणं मण्डनम् । सुन्दरम्, अतएव सर्वेषां मनोहारकम् । भवन्तं प्राप्य, भवत्सांनिध्यसुयोगं प्राप्य भवे संसारे न विहरे । त्वत्संपर्कमात्रेण संसारे याताऽऽयातं समाप्यते इत्याशयः ॥१६६॥

जागृहि जागृहि कल्किहरे ! द्विविपद्रमणीकमनीयविलोचन !
जागृहि जागृहि सत्वनिधे ! विलसत्कलिदोषकदम्बकमोचन ॥१६७॥

द्विविपदां देवानां रमणीनां कृते कमनीये सुन्दरे लोचने यस्य तत्संबुद्धौ । हे सत्वस्य बलस्य निधानभूत ! विलसतां कलियुगदोषकदम्बकानां ( समूहानाम ) मोचन दूरीकारक ! ॥१६७॥

जागृहि जागृहि दुर्नयखण्डन शत्रुचमूचयचण्डविरोचन ।
जागृहि जागृहि वक्त्ररुचैव विभातविकासिसरोरुहशोचन ॥१६८॥

दुर्नयस्य दुष्टनीतेः खण्डनकारक ! शत्रुणां चमू( सेना )चयस्य ( समूहस्य ) कृते चण्डविरोचन प्रचण्डसूर्य ! वक्त्रस्य मुखस्य कान्त्यैव विभाते प्रातःकाले विकासिनां सरोरुहाणां कमलानां शोचन तिरस्कारक ! सवाईजयसिंहमहाराजेन जयपुरे प्रतिष्ठापितस्य श्रीकल्किदेवस्य प्रातःकाले जागरणमङ्गलम् । विशेषाऽवबोधाय ईश्वरविलासस्य षष्ठः सर्गो विलोकनीयः ॥१६८॥

राजीवं समुदीतवासरमणिः सोल्लासमानन्दय-
त्याशा मांसलयन्यहो वरदया भासा स भासांनिधिः ।
विप्रो दानिवरं समाश्रयति स त्वामात्तभक्त्यञ्जलिः
किं चेतो दयते प्रभात इतरानाप्यायिनी लोकतः ॥१६९॥

[ रवि-दान्त्रोः श्लेषः ]

समुदितः वासरमणिः सूर्यः राजीवं कमलं सोल्लासं यथा स्यात्तथा आनन्दयति विकासयति । 'समुदीत' इति 'ईङ्' गतौ इति दैवादिकात् क्तप्रत्यये बोध्यः । यथा लक्ष्मीसहस्रे-'उदीता दुग्धाब्धेः कुवलयपरीतापशमिनी' इति । भासांनिधिः ( सूर्यः )

सः कामपूरिकया भासा कान्त्या आशाः दिशः मांसलयति पुष्टाः करोति । हे सूर्य ! आत्तः गृहीतः भक्तेः अर्घ्याञ्जलिर्येन ईदृशः स विप्रः दानिवरं त्वां आश्रयति । किञ्च— इतः प्रभाते आप्यायन ( पूरण—वर्द्धन ) कारणात् नीलोकतः विलोकनात् इतरान् जनान् अपि दयते दयया संरक्षति । 'नीलोकः' इति 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति उपसर्गदीर्घाद् भवेत् । सूर्यस्य, दातुश्च श्लेष इति ग्रन्थकर्तुराशयः ॥१६९॥

गुणवद्गणितो गुणिनां शृणुयादेवैष सुमधुरा वाचः ।
यद्यस्य कर्णलग्नो न स्यादौदुम्बरो मशकः ॥१७०॥

गुणवद्भिर्गणितः संमानितः, अथवा गुणवत्सु गणितः प्रतीक्षितः अयं गुणिजनानां वाचः शृणुयादेव । किन्तु—औदुम्बरः उदुम्बरफलान्निष्क्रान्तः मशकः अस्य कर्णलग्नो ऽस्ति । अतएव तस्य मन्द—कर्णध्वनिना अयं वाचो न शृणोति । गुर्जरब्राह्मणेषु औदुम्बर— भेदवान् कश्चिद् ब्राह्मणो ग्रन्थकारस्य आलोचनाविषयः । अतएव मशकायितोऽपि स पिशुनतां कुर्वन् अस्य राजादेः कर्णौ उपजपति, न चायं ग्रन्थकारस्तं बहुमन्यते । अतएव सावहेलमिदमुक्तम् ॥१७०॥

सारङ्गाः स्वाङ्गभङ्गात्कृतबहलभियो यान्तु नैश्चिन्त्यमन्तः
कोलाः संभ्रान्तिलोलाः किमपि न दधतां भीतिमत्तां भवन्तः ।
नायं सायंतनोद्यद्घनसदृशलसत्कुम्भिकुम्भाऽसृगन्तः—
संभारस्नानसंभावितसुखनखरः साभिलाषो भवत्सु ॥१७१॥

स्वस्य अङ्गभङ्गात् कृता बहला प्रचुरा भीः यैस्ते । निजाङ्गभङ्गहेतुकां भीतिं कुर्वाणाः सारङ्गाः कृष्णमृगाः निश्चिन्ततां यान्तु । संभ्रमेण चञ्चलाः कोलाः वराहाः !! भवन्तः किञ्चिदपि भीतिमत्तां भययुक्ततां न दधतां धारयन्तु । दधातेर्लोटः प्रथमपुरुष- बहुवचनम् । सायंकालभवस्य उद्यतः उदीयमानस्य घनस्य मेघस्य सदृशम्, कुम्भिकुम्भस्य ( कुञ्जरगण्डस्थलस्य ) यत् असृक् ( रक्तं रुधिरम् ), तस्य अन्तःसंभारे अन्तःप्रवाहे [ रुधिरराशौ ] स्नानेन संभावितसुखाः ( उत्पादितप्रमोदाः ) नखाः यस्य ईदृशः अयं सिंहः भवत्सु ( मृगादिषु युष्मासु ) साभिलाषो नास्ति । अयं मृगेन्द्रः कुञ्जरेन्द्रस्य कुम्भगलद्रुधिरे निजनखानां स्नानाभिलाषुकोऽस्ति । भवद्रुधिरसाभिलाषो नास्ति । अन्योक्तिः ॥१७१॥

समुदज भवसागरतः कमलाभर्तः समुदज भवसागरतः
व्रजधव सकला लीला माताऽमाती
व्रजधव सकला लीला०
कामनापूरिका स्वानां नास्वाकामितसेवका ।
कावसेयापि कान्या सा मान्याकाराधिनासका ॥ [ कमलबन्धः ]

हे कमलाभर्तः लक्ष्मीपते ! भवरूपात् सागरात् समुदज सम्यक् उत्क्षिप उद्धर । 'अज गतिक्षेपणयोः' । हे व्रजधव व्रजपते ! ॥१७२॥

लीलालोलितनूतनूतनलतालालित्यनित्योत्सवः
कार्णाटीकुचकुम्भसंभ्रमपरीरम्भस्फुरत्सौरभः ।
गत्वाऽन्तर्मलयाऽद्रिसुन्दरदरीसंक्षोभकारी मुहु-
र्जातोऽयं हृतनर्मदाऽम्बुरधुना वातोऽपि शातोदरि ! ॥१७३॥

हे शातोदरि कृशोदरि ! लीलया लोलिताः कम्पिताः ये नूताः चूताः ( आम्राः ) नूतनलताश्च, तेषां लालित्येन ( सौन्दर्येण ) नित्यम् आनन्दयुक्तः । कुचकुम्भयोः संभ्रमेण ( आनन्दाऽऽवेगेन ) परीरम्भः आलिङ्गनं तेन दीप्यमानसौगन्ध्यः । मलयान्तः गत्वा, तस्य मलयाचलस्य सुन्दरगुहानां संक्षोभ( विचलन )कारी, अयं वातः अपि संप्रति हृतम् आनीतं नर्मदायाः अम्बु ( जलस्य शीकराः ) येन तादृशः, शीतः, मन्दः, सुगन्धिश्च जात इत्यर्थः ॥१७३॥

आरादापत्तिभारापहरणनिपुणा रत्नहाराऽभिरामा
स्वाराज्यानन्दसाराधिकसुखवसतिः सर्वदाऽऽराध्यरूपा ।
कारागाराधिकीर्तिप्रदभवहरणा ज्ञानधाराऽभिरम्या
माराऽरातेर्विहाराऽऽस्पदमवतु शिवा निर्विकाराशयान् वः ॥१७५॥

दूरादेव आपत्तीनां भारस्यापहरणे निपुणा । स्वः-राज्यस्य स्वर्गराज्यस्य य आनन्दः, तस्य यः सारभागः, ततोऽप्यधिकस्य सुखस्य निवासभूता । आराध्यं उपासनीयं रूपं यस्याः सा । काराऽऽगारादप्यधिकायाः कीर्तेः ख्यातेः प्रदः यः भवः ( संसारः, संसारे जन्म-मरणयोर्बन्धः ) तस्य हरणः । ज्ञानिनः कारावासादप्यधिकं क्लेशं भवस्य प्रख्यापयन्ति । ज्ञानधारया अमितो रम्या । मारस्य अरातेः शत्रोः ( श्रीशिवस्य ) विहारस्थली, शिवा पार्वती निर्विकारहृदयान् युष्मान् अवतु ॥१७५॥

सार सानन भारा धा धाराभा नन सारसा ।
तव नाम नदी तार रतादीनमना वत ॥१७६॥ [ गतप्रत्यागतबन्धः ]

इतो हैन्दवीं सृष्टिमानन्दयन् स्वै-
र्गुणौघैस्ततो यावनीं सृष्टिमुच्चैः ।
महेन्द्रास्पदे श्रीयुतः सूर्यमल्ल-
स्तटद्वन्द्वसंयत्तरङ्गः समुद्रः ॥१७७॥

स्वैः गुणसमूहैः इतः हिन्दुप्रजाः आनन्दयन्, ततः यवनप्रजाः आनन्दयन् । महेन्द्रास्पदे तस्मिन्काले तन्नाम्ना प्रथिते स्थाने सूर्यमल्लः [ सूरजमल जाट इति इतिहास-प्रसिद्धः ] तटद्वये संयन्तः संमिलन्तः तरङ्गाः यस्य, ईदृशः समुद्रः अस्ति । समुद्रतरङ्गाः यथा पूर्वपश्चिमयोस्तटयोर्मिलन्ति तथा अस्य गुणाः हिन्दु-यवनप्रजाः प्रीणयन्ती-त्याशयः । सवाईजयसिंहस्य समयमारभ्य माधवसिंहदेवस्य शासनं यावत् आगरा-दिल्ली-परिसरे प्रवर्धमानः सोयं जट्टराजः, यस्य राज्यं कालक्रमेण 'भरतपुर' प्रान्तनाम्ना प्रासिध्यत् । ग्रन्थकारो जट्टराजस्य राज्येऽपि संमानमधिगत्य 'दुर्गाभक्तितरङ्गिणी' नामकं ग्रन्थं प्रणिनायेति बहूनामुक्तिः । 'ईश्वरविलासेऽ'पि किञ्चिद्वृत्तान्तोऽस्य समुपल-भ्यते ॥१७७॥

उद्यन् दोषाकरस्याऽप्यथ निजचरणैकाश्रयस्य प्रभावं
तन्वानः किंकराणां किमुत गुणवतां रज्यतामम्बुजानाम् ।
भाति ख्यातः प्रभातोदयगिरिगदितोद्दामविद्योतरश्मि-
ग्रोदञ्चन्मण्डलाग्रप्रचुरतररुचिः श्रीयुतः सूर्यमल्लः ॥१७८॥

उद्यन् उदीयमानः यः सूर्यः दोषाणां खनिभूतस्य, वास्तवे तु दोषायाः रात्रेः कारकस्याऽपि चन्द्रस्य निजपादा एव एकः आश्रयो यस्य । वास्तवे तु पादाः रश्मयः आश्रयो यस्य । सूर्यस्य किरणा एव शुक्लपक्षे यथाक्रमं चन्द्रे संगत्य चन्द्रं प्रकाशयन्तीति ज्योतिर्वैज्ञानिकानां प्रसिद्धिः । ततश्च दोषाकरस्यापि चन्द्रस्य निजपादाश्रयत्वात्सोयं सूर्यः प्रभावं प्रकाशादिमाहात्म्यं तन्वानः विस्तारयन् भाति, इति । गुणयुक्तानाम्, वास्तवे तु गुण ( तन्तु ) युक्तानाम् । रज्यताम् अनुरक्तानाम, वस्तु-तस्तु राग ( 'रङ्ग' ) युक्तानाम् किंकराणां सेवकानां अम्बुजानां किमुत ? दोषाकरस्यापि यदा प्रभावं विस्तारयति तदा गुणयुक्तानाम् अनुरक्तानाम् कमलानां विषये किं वक्तव्यम् ? अर्थात्तेषां तु पोषणं वृद्धिं च कुर्यादेव । प्रभाते उदयगिरौ उदयाचले गदिताः कीर्तिता

उद्दामविद्योतरश्मिषु प्रचण्डप्रकाशकिरणेषु प्रोदञ्चतः प्रोज्जृम्भमाणस्य मण्डलाग्रस्य निज-बिम्बाग्रभागस्य प्रचुरतरा रुचिः ( कान्तिः ) यस्य ईदृशः मल्ल इव सूर्यः भाति । सूर्य-मण्डलस्य प्रभूता कान्तिः उदयाचलस्योपरि प्रचण्डप्रकाशस्य, तत्किरणानां मध्ये भवति या हि स्वभावेन कीर्त्यते । अयं च सूर्यमल्लनामा जट्टराजः पूर्वदिशि प्रख्यातस्य उदय-पर्वतस्य उपरि, प्रचण्डतेजःप्रकाशस्य मध्ये, चञ्चतः चमत्कुर्वतः मण्डलाग्रस्य खड्गस्य प्रचुरतरा कान्तिः यस्य ( सूर्यमल्लस्य ) भवति तादृशोऽस्ति । "कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्" इत्यमरः । कविनाधिष्ठितात् राजस्थानतो भरतपुरप्रदेशः पूर्वस्यां दिशि वर्तते । अतएव प्रभाते वर्ण्यस्य राज्ञः खड्गस्य कान्तिः उदयपर्वतस्य परितः प्रकाश-मानस्य रश्मिजालस्य मध्ये भातीत्याशयः ॥१७८॥

उन्मीलन्मल्लिवल्लीमिलदलिपटलीतारझांकारचारु-
प्रोद्दामोद्यानदीव्यत्कनकमणिमहामण्डपे रत्नवेद्याम् ।
उच्चैः संस्थापितेयं त्रिभुवनजननी राजराजेन्द्रविद्या
दद्याद्द्याऽनवद्यां हरिहर भवतः सर्वसौभाग्यलक्ष्मीम् ॥१७९॥

उन्मीलन्तीषु विकसन्तीषु मल्लिवल्लीषु मिलन्तीनां अलि( भ्रमर )पटलीनां तारेण झांकारेण (तदनुकारिशब्देन) चारुणि, प्रोद्दामे विशाले उद्याने आरामे दीव्यन् राजमानो यः कनकमणिमयो महान् मण्डपः तस्मिन् । रत्नजटितवेद्याम् संस्थापिता राजराजेश्वरी महाविद्या अद्य अनवद्यां निर्दोषतया सर्वप्रशस्यां सर्वसौभाग्यसंपदं भवतः दद्यात् ददातु हे हरिहर ! ॥ इदं राजराजेश्वरीमन्दिरं 'गङ्गापोल'गोपुराद्बहिः, 'मानबाग' इति प्रसिद्धस्यो-द्यानस्य समीपे अस्तीति जाने । 'मानबागस्यास्य' जम्बूफलानि जयपुरे 'मानबाग का भौंरेल्या' इति प्रासिध्यन् ॥१७९॥

पायादुद्दण्डचण्डभ्रमितभुजमहामारुताऽऽवर्तवर्ति-
त्रस्यद्वेतालजालप्रकटितविविधस्तोत्रविस्मेरवक्त्रः ।
न्यक्कुर्वन्निर्जरीणां कुचकलशपटानुद्भटाभिर्जटाभि-
र्जीवातुश्चण्डिकायाः प्रकटतनटनभ्रान्तिकृत् कोपि देवः ॥१८०॥

उद्दण्डाः, चण्डं यथा स्यात्तथा भ्रमिताश्च ये भुजाः तेषां महतः ( प्रचण्डस्य ) मारुतस्य ( पवनस्य ) आवर्ते चक्रे वर्तमानम् त्रस्यद् भयमुपगच्छद् च यत् वेतालानां भूतादिवद्देवयोनिविशेषाणां जालम्, तेन प्रवर्तितेन विविधस्तोत्रेण विहसत् मुखं यस्य

सः । उद्भटाभिः प्रचण्डं प्रस्फारिताभिः जटाभिः देवाङ्गनानां कुचकलशयोः पटान् ( वस्त्राणि ) न्यक्कुर्वन् उड्डाययन्, प्रकटितायाः नाट्यभ्रान्तेः ( भ्रमणस्य ) कारकः, श्रीचण्डिकायाः जीवातुः जीवनौषधिभूतः ( प्राणप्रियः ) कोपि देवः भगवान् शङ्करः पायात् रक्षतात् ॥ १८० ॥

जीवातुर्जीवाऽऽतुरजीवंजीवाङ्गनानां या।
शरदिन्दुशालिनी सा शिव शिव न निशा कृशा भवति ॥१८१॥

जीवने आतुराः याः जीवंजीवानां चकोराणाम् अङ्गनाः चकोर्यः, तासां या जीवातुः जीवनौषधिः ( अस्ति ), शरच्चन्द्रेण शोभमाना सा निशा हन्त न कृशा भवति, न क्षीयते, न समाप्यते [ वियोगिन उक्तिः ] ॥ १८१ ॥

श्रौतस्मार्तविचारचारुमतयो विद्याऽनवद्याऽऽशयाः
सद्यः स्वर्धुनितोयपुण्ययशसः श्रेष्ठाः पुनः संततम्।
यूयं सद्गुणवृन्दवारिनिधयः सभ्याः सतां संमता
युष्माकं खलु संगतः सुकृतिनां लोकेषु धन्या वयम् ॥१८२॥

विचारे निपुणबुद्धयः। अनवद्यः निर्दोषः ( स्वच्छ उदारः ) आशयः अन्तःकरणं येषां ते। स्वर्धुनी( गङ्गा )जलवत् पावनकीर्तयः। पुनः सर्वप्रकारैः श्रेष्ठाः। सद्गुणसमूहानां सागराः, सभासु हिताः, यूयं सज्जनानां सर्वतो मानिताः। युष्माकं संगतः संगात् ( तसिल् ) सुकृतिनां पुण्यवतां लोकेषु मण्डले वयमपि धन्याः यशस्याः जाताः ॥ १८२ ॥

यूयं कल्पतरुप्रसूनसदृशाः पुण्या, वयं षट्पदा
यूयं भानुसमा वयं परिलसत्पद्मावलीसंनिभाः।
यूयं सन्त इमे वसन्तसमयास्तत्सङ्गिवृन्दा वयं
यूयं चन्द्रकरा वयं च कुमुदस्तोमाः, स्वयं मन्महे ॥१८३॥

प्रसूनानि पुष्पाणि तत्सदृशाः पुण्याः पवित्राः, भवदाधारेण मोदमाना वयं भ्रमराः। पद्मावली कमलराजिः तत्सदृशाः इमे यूयं सन्तः प्रशंसनीयाः वसन्तस्य समयाः स्थ, वयं तत्सङ्गिनो वृन्दाः। चन्द्रस्य कराः किरणाः, वयं च कुमुदानां कैरवाणां स्तोमाः समूहाः, इति वयं स्वयं मन्यामहे ॥१८३॥

सुराणामादिस्थः शुभमतिनिधानान्तरगतः
कवीनामाद्यत्वं सुकृतनिकरस्याऽप्यवधिताम् ।
परिप्राप्तो विद्वान् समुदितचतुर्वर्णसुखदः
स कश्चिद्विख्यातस्त्रिजगति विपश्चिद्विजयते ॥१८४॥

सुराणाम् आदौ स्थितः 'सु' इति । शुभमतेः यत् 'निधानं' तस्य अभ्यन्तरगतः 'धा' इति । कवीनाम् आद्यः 'क', सुकृत( पुण्य )'निकरस्य' अवधितां अन्ततां प्राप्तः 'र' इति । समुदितैः चतुर्भिर्वर्णैः अक्षरैः सुखकारकः । किञ्च समुदितानां चतुर्णां ब्राह्मणक्षत्रियादिवर्णानां सुखदः । विपश्चिद् विद्वान् । ततश्च 'सुधाकरः' इति ॥१८४॥

विबुधानामास्वाद्या सुधासमुद्भासिसरसकवितैव ।
तस्यास्त्वमाकर इह श्रीरत्नाकर भवो भवे भवसि ॥१८५॥

विबुधानां देवानां पण्डितानां च । सुधा( अमृत )वत् समुद्भासिनी शोभमाना सरसा कवितैव ( अस्ति ) । हे रत्नाकर ! तस्याः कवितायाः त्वम् आकरः खनिभूतः भवे संसारे भवः शंकरः इव भवसि । केचितु रत्नाकरभवः रत्नाकरजातः पुत्रः, यः विबुधानाम् आस्वाद्या सुधा, तस्याः आकरः 'सुधाकरः' इति कल्पयन्ति ॥१८५॥

इति राजसि मादृग्जनजीवंजीवैकजीवातुः ।
सुचिरं जीव सुभाग्यैर्मार्कण्डेयायुरवनिमार्तण्ड ! ॥१८६॥

मादृशजनरूपा ये जीवंजीवाः चकोराः तेषामेकमात्रो जीवनौषधिस्त्वम् चन्द्र इव इति पूर्वोक्तप्रकारेण शोभसे । हे मार्कण्डेयवदायुःशालिन् त्वं सुन्दरैर्भाग्यैः सुचिरं जीव ॥१८६॥

देव श्रीबुद्धसिंह त्वदसिजलधरोल्लासिसत्कीर्तिनीरे
तुङ्गप्राच्यादितीरे भवसरसि भवत्साधुवादोर्मिसंघे ।
नक्षत्राण्येव हंसाः परिलसितनभोनीलिमा शैवलौघः
पूर्णेन्दुः पद्ममस्मिन् , मधुरमधु सुधा, देववृन्दा मिलिन्दाः ॥१८७॥

तव असिरूपेण जलधरेण उल्लासिनी ( प्रवाहिता ) सत्कीर्तिरेव नीरं यस्मिन् तादृशे । प्राची दक्षिणेत्यादयो दिशः तुङ्गानि तीराणि यस्मिन् । भवतः त्वत्सम्बन्धिनः साधुवादाः ( प्रशंसाः ) एव ऊर्मि( तरङ्ग )समूहो यस्मिन् । अस्मिन् जगद्रूपे

सरोवरे नक्षत्राणि ताराः एव हंसाः, आकाशस्य नीलता शैवालसमूहः, सुधा मधुर मधुः देवसमूहाः भ्रमराः सन्ति ये प्रत्यहं तदमृतं जुषन्ति ॥१८७॥

वह्निर्भूमितलं विवेश, दिवसैर्दौर्बल्यमासादितं
सूर्यो वीक्षितमात्र एव कलयत्यस्ताचलान्तर्गतिम् ।
प्रालेयोद्भववेदनातिविषमे हेमन्तकालेऽधुना
रात्रिर्भूरिकुहेलिकाकणमिषाद्बाष्पोदकं मुञ्चति ॥१८८॥

प्रालेयस्य हिमस्य प्रपातपीडया कठिने अस्मिन् हेमन्तर्तौ अग्निः पातालं प्रविवेश [ यतः उपरि हिमपातो ] भवति । शीतपीडया दिवसा दुर्बलाः ( लघवः ) जाताः । सूर्यो यत्किञ्चिद् दर्शनं दत्त्वैव अस्ताचलस्य अभ्यन्तरे गतिं कलयति ( करोति ) । शीघ्रमस्तं गच्छतीत्याशयः । इयं रात्रिः बहुतरकुहेलिका( 'कुहासा' ओस )बिन्दु-व्याजात् वाष्पजलं मुञ्चति । नेमे अवश्यायबिन्दवः, अपि तु रात्रेरश्रुजलं तदेतदित्याशयः ॥१८८॥

आग्नेयीं दिशमाश्रितोऽप्युदयते सङ्गोपिताङ्गो रविः ( मुहु )
र्भस्मस्तोममिषेण वस्त्रपिहितस्वाङ्गोऽद्य वैश्वानरः ।
आवीतेन समन्ततः स्वशरणे शीतेन भीतोष्णता
तन्वि त्वत्कुचमण्डलैकशरणे भूयश्चिरं जीवतु ॥१८९॥

उष्णतालब्धये अग्निसम्बन्धिनीं दिशम् आश्रितोऽपि रविः कुज्झटिकाच्छन्न-तया वस्त्रादिना गोपिताङ्ग एव उदयते । भस्मस्तोम( समूह )व्याजेन वैश्वानरः अग्निरपि वस्त्रैः पिहितानि अङ्गानि यस्य तादृशः । अग्निरपि भस्माच्छन्नतया वस्त्रा-च्छादित इव न स्फुटं ज्वलतीत्याशयः । [ समन्ततः आवीतेन आच्छादनेन स्वशरणे स्वस्य उष्णतायाः शरणे रक्षके ] शीतेन भीता उष्णता ( ऊष्मा ) तव कुचमण्डलमेव एकं शरणं रक्षादायकं यस्याः एवंभूता सती भूयः चिरकालं यावत् जीवतु । चिरकालं यावत् त्वत्कुचयोरुष्णता जागर्तु, त्वं स्थिरयौवना भूयाः, इति व्यङ्ग्यम् ॥१८९॥

सौजन्यव्रज–सौहृदव्रज–सुहृत्कार्यव्रज–श्रीव्रज–
श्रीशालिव्रज–सद्यशोव्रज–बहुश्रेयोव्रजानां भवान् ।
एको भूषणतां बिभर्ति भुवने तेनैव सत्कीर्त्यते
लोकेऽस्मिन् व्रजभूषणेत्यभिधया जीयात्सहस्रं समाः ॥१९०॥

[ भगवतो नामोपरि ]

सुजनता–सौहार्द( मैत्री )—मित्रकार्य—साधन—सम्पत्ति( अथवा शोभा )–श्रीयुक्तपुरुष–सत्कीर्ति–बहुकल्याण, एतद्व्रजानां ( गणानाम् ) भवान् भूषणतां धारयति । ततश्च एतेषां व्रजानां भूषणमिति व्रजभूषणनाम्ना भवान् सहस्रवर्षाणि यावत् जीवतु । कांकरोलीसंस्थानस्य पूर्वगोस्वामिमहोदयस्य कीर्तिरियम् ॥१६०॥

श्री मतामसमतामता नवा नम्रनम्रनरभक्तिभव्यभ ।
क्षोभयेदमदवादसादरं मद्यमत्रमनमस्तदासदा ॥१६१॥ [ हारबन्धः ]

पायान्नः शशिखण्डमण्डितशिराः कैलासकेलीधरः
कैवल्याहितवैभवः कुशलकृत् कामाहितैकप्रदः ।
साराधायकहृद् विरूपनयनानन्दी सदामोदरो
रुद्राणीकृतदानवेशसुभगः श्रेयाननाद्याऽक्षरः ॥१६२॥

[ विष्णुशिवयोः श्लेषः ]

अनाद्यः [ नास्ति आद्यो यस्मात्, सर्वादिमः ] चासौ अक्षरश्च स शिवः पायादिति दृश्यमानोऽर्थः । किन्तु सर्वेषु पदेषु अनाद्याऽक्षरः आद्याक्षररहितः । ततश्च सदामोदरः [ आद्याक्षरराहित्येन दामोदरः ], शिखण्डमण्डितशिराः, लास( नृत्य ) केलीधरः, बल्याहितवैभवः ( बलेः सकाशात् आहितं गृहीतं वैभवं येन सः ), शलकृत् ( शलं तन्नामकं कंसस्य मल्लं कृणन्ति हिनस्ति सः ), माहितैकप्रदः ( मायाः लक्ष्म्याः हितस्य एकमात्रः प्रदाता ), राधायकहृद् ( राधाम् अयति हृद् हृदयं यस्य सः ), रूपनयनानन्दी ( रूपेण नयनयोः आनन्दजनकः ), द्राणीकृतदानवेशसुभगः ( द्राणीकृताः विद्राविताः दानवेशाः श्रेष्ठदानवाः येन, अतएव सुभगः ), इति दामोदरपक्षेऽर्थः ॥१६२॥

त्वय्यर्चिते ऽखिलसुरान् सुनुते जनोऽयं
ग्राम्यस्य नैव कुरुते क्वचन प्रसक्तिम् ।
त्वद्विप्रयोगलव एव समभ्युदीते
तापः समस्तनिगमांस्तव नाम्न्यधीते ॥१६३॥

तव वियोगस्य लेशमात्रे एव समभ्युदीते [ उदिते सति, 'ईङ् गतौ' अस्मात् क्तः ], तापः संतापः खेदः समभ्युदीते अभ्युदेति आगच्छति । तव वियोगप्रसङ्गे एव जाते सर्वथा तापः उदेति । क्तान्तसप्तमी, लट्प्रथमपुरुषैकवचनं, एकमेव भवतीति

चमत्कारः । तव नाम्नि अधीते पठिते सति समस्तनिगमान् वेदान् अधीते पठति, इङ् अध्ययने । लडेकवचनम् , अत्रापि विष्णुशिवयोरर्थश्लेषः स्यात् ॥१९३॥

न सा राजमानापि सा राजमाना नभोगावलाभापि भोगावलाभा ।
अहोरातमोदापि होरा तमोदा न नाभीकलापापि नाभीकलापा ॥१९४॥
[विरोधाभासः]

सा राजमानाऽपि नसा नासिकया राजमाना शोभमाना । सा राजमाना, नसा–राजमाना इति विरोधाभासः । नभसि गच्छति सा नभोगा, नभोगा च सा अवला स्त्री देवाङ्गना, तदाभा, तत्सदृशी । अपि सा भोगार्थं या अवला तदाभा, किं वा भोगानाम् अवलाभः प्राप्तिर्यस्याः सकाशात् सा । होरा तमोदा, अन्धकारदायिनी होरा ( घण्टात्मक कालः ) ऽपि अहनि रातः दत्तः मोदः यया सा । दिवसे दत्तानन्दा । न नाभ्यां कलापो भूषणं ( काञ्च्यादिकं ) यस्याः ईदृश्यपि नाभी कलापा नास्तिभीः भयं यस्य सः अभीकः, न अभीकः नाभीकः [ न शब्देन समासः ] नाऽभीकः अर्थाद् अनिर्भयः सखीत्वाद् भयशाली लापः लपनं संभाषणं यस्याः । नाभ्यां भूषणरहिताऽपि अनिर्भय[ सभय ] लापिनी, इति कदाचिदर्थः स्यात् । अत्रापि विरोधालंकारः ॥१९४॥

अकलितघनसारेऽपि श्रीफलवत्कलितघनसारे ।
हाररहितेऽपि हारिणि महदाश्चर्यं त्वदीयकुचयुगले ॥१९५॥

न कलितः चर्चितः घनसारः कर्पूरो यस्मिन् कर्पूरलेपरहितेऽपि, श्रीफल( बिल्व ) वत् कलितः घनः निबिडः सारो दृढभागो यस्मिन् । अर्थाद् बिल्वफलवत् निबिड–कठिने । हारेण रहितोऽपि हारी मनोहारी तस्मिन् त्वदीयकुचयुगले महत आश्चर्यम् ॥१९५॥

माधवेन्द्रद्विषद्वामाः क्षामाः कामार्तितो दधुः ।
बाष्पौघान्तरितौ सायं चक्रवाकाविव स्तनौ ॥१९६॥

माधवेन्द्रस्य द्विषद्वामाः वैरिस्त्रियः कामार्तितः कामजपीडया क्षामा दुर्बलाः अतएव रोदनात् बाष्पौघेन अन्तरितौ आच्छादितौ सायंकाले चक्रवाकौ इव स्तनौ दधुः धारयामासुः । चक्रवाकौ चक्रवाकदम्पती अपि सायंकाले परस्परं वियुक्तौ भवतः । एवम् इमौ वैर्यङ्गनास्तनौ अपि अश्रुधारावशान् मिथः अन्तरितौ भवतः ॥१९६॥

तेजस्विनो विदलितास्तव प्रतापेन माधव विमुक्तौ द्वौ ।
बाडवतया किलौर्वो मित्रतया चित्रभानुरपि ॥१९७॥

हे माधवसिंह ! सर्वेऽपि तेजस्विनः तव प्रतापेन विदलिताः खण्डिताः शमित–तेजस्काः कृताः । केवलं द्वौ त्यक्तौ । बाडवः ब्राह्मणः इति कृत्वा और्वः बडवनलः ( सामुद्रोऽग्निः ), मित्रतया सुहृत्तया ( मित्रमिति मत्वा ) चित्रभानुः सूर्यः । 'द्विजाग्र जन्म–भूदेववाडवाः', 'और्वस्तु बाडवो वडवानलः' इति कोशः । द्युमणिस्तरणिर्मित्रश्चित्र भानुर्विरोचनः, 'मित्रो रवावपि' इति च कोषः ॥१९७॥

किञ्चिद्दैवसहायेन पुरुषार्थे यतेत भोः ।
नेह गुप्ततमः कर्ता स्फुटं पद्ये विलोक्यते ॥१९८॥

दैवेन सहायेन ( सहायकेन ) पुरुषार्थे पौरुषे यत्नं कुर्यात् । 'नेह गुप्ततमः' अत्र 'ना इह', इति ना इति कर्तैव गुप्तः । ततश्च ना मनुष्यः दैवं सहायकं कृत्वा पुरुषार्थे यतेत, इत्यर्थः ॥१९८॥

मूर्द्धनि जाग्रति विधौ किल वक्रे या दशा भवति सैव ममापि ।
भस्मधूलनदिगम्बरतादि वेद्मि निग्रहमनुग्रहणं वा ॥१९९॥

मूर्ध्नि विधौ चन्द्रमसि वक्रे जाग्रति । शिवमूर्द्धि चन्द्रस्य कला, अतएव चन्द्रस्तत्र वक्रः । किञ्च विधौ विधातरि मूर्द्धनि वक्रे प्रतिकूलतया जाग्रति लोकस्य या दशा यथा शिवस्य भस्मना उद्धूलनम्, दिगम्बरता ( नग्नता ), इत्यादिः सा दशा ममापि । तामेतां दशां निग्रहम् ( पराभवम् ) अनुग्रहणं कृपां वा वेद्मि जानामि ? अत्र विधुविधि इति इकार–उकारवर्णयोः श्लेषः ॥१९९॥

कृषीष्ट फलसंपदं घन इवाऽति भूयान्मनो
महीतलरसप्रदस्तदमृतं सदासीष्ट नः ।
क्रियादरमहो भवान् कुशलमाशु देयादहो
वरादपि परं तमो हर दयाम्बुधे यात्वलम् ॥ २०० ॥
[ कृषीष्ट दासीष्टेत्यादि क्रियापदम् ]

अतिभूयान् अतिबहुलो घन इव मेघ इव फलसंपदं फलसंपत्तिं कृषीष्ट क्रियात् इति आशिष्यते [ आशीर्लिङ्–कृञः आत्मनेपदम् ] । महीतलाय पृथिवीतलाय

पृथ्वीतले वा रसप्रदः सूर्यरश्मिद्वारा रसानां सर्वविधरसानां प्रदाता सः ( विष्णुः शिवो वा ) नः अस्मभ्यम् तत् अमृतं दासीष्ट देयात् इति आशीः प्रार्थ्यते । [ ददातेरात्मनेपदे—आशीर्लिङ् ] अहो हर भवान् अस्मभ्यम् अलं पर्याप्तं यथास्यात् तथा कुशलं क्षेमं कल्याणं क्रियात् कुरुतात् इति आशिष्यते [ आशीर्लिङ् ]। अहो वरात् वरदानात् अपि परम् उत्कृष्टं वस्तु निर्वाणादिकं भवान् देयात् दत्तात् इत्याशा क्रियते [ आशीर्लिङ् ] । हे दयाम्बुधे हर ! अलं पर्याप्तं तमः अज्ञानम् यातु गच्छतु निवर्तताम् । ॥२००॥

भूयान्मोदस्त्वदीयात्पटुतरभजनान्मे स्तुतोराद्दतस्य
प्रोद्यद्भूयोभवाब्धेरपनयतु दमस्यादमस्यादमत्वम् ।
सद्योदारादिमायां शमय, शमनजां भीतिमुग्रां हरोच्चैः
कामेनाबाध्यमानं दयय जनमिमं स्वं विहायाऽन्यसक्तम् ॥ २०१ ॥

[ अत्रापि ]

भवतः स्तुतीः स्तोत्राणि आद्दतस्य आदरं कुर्वतो मे त्वदीयात् पटुतरभजनात् अतिनिपुणतया सेवनात् मोदः आनन्दः भूयात् भवतु [ इति प्रार्थ्यते ] । प्रोद्यतः प्रवर्द्धमानात् भूयसः विस्तृतात् भवाब्धेः भवसागरात् माम् अपनयतु । दार( पत्नी )-पुत्रादीनां मायां मोहबन्धनं सद्यः शमय शान्तं कुरु । शमनात् यमात् जाताम् उग्रां भीतिं उच्चैर्यथा तथा हर अपनय । 'शमनो यमराड् यमः' इति कोशः । कामेन कामदेवेन आ समन्तात् बाध्यमानं पीड्यमानं विवशीकृतं इमं स्वं स्वकीयं ( त्वद्भक्तम् ) जनं दयय दयया स्वीकुरु । दयतेर्णिजन्तात् लोटि मध्यमपुरुषैकवचनम् । अन्यसक्तं अन्येषु पदार्थेषु सक्तं आसक्तं लग्नं [इमं जनं विहाय दूरे कृत्वा, दयय दयया स्वीकुरु] ॥२०१॥

ललाऽट चत्वराऽऽश्रय प्रकर्ष मोदमानय
प्रभाहि माहि मा तप प्रसर्प चारु चन्दिरे ।
अये. ह. सज्ज. नाधमो. ऋव. प्रसाधयामृतं
रसा. वहा. वधान. हत् स्वमानके सदाशिवे ॥ २०२ ॥

पञ्चचामरवृत्तेऽत्र याः क्रिया एकविंशतिः ।
ता विद्ध्येकाधिकरणे परमात्मनि शंकरे ॥ २०३ ॥

अग्रिमपद्ये सूचनानुसारम्—एकविंशतिक्रियाणामधिकरणम् ( आधारः ) सदाशिवः । ततश्च—सदाशिवं 'लल' अभिलष । तत्समीपम् 'अट' ( शरणमागच्छ ) । च—त्वर,

तस्य शरणग्रहणार्थं 'त्वर' ( त्वरस्व )। सदाशिवम् 'आश्रय'। सदाशिवं 'प्रकर्ष', भक्त्या तमेव प्रकर्षेण आकर्ष, निजसमीपमाह्वय। अथवा तदाश्रयेण 'प्रकर्ष', उत्कर्षं लभस्व। सदाशिवध्याने 'मोद' ( मोदस्व, आनन्दितो भव ) सदाशिवं 'मानय' अर्चय। अथवा स्वरत्नकं 'मानय' स्वीकुरु। सदाशिवस्याश्रयेण 'प्रभाहि' (शोभस्व, 'भा दीप्तौ')। सदाशिवभक्तेषु 'माहि' अभ्यन्तरो भव 'तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाऽभ्यागमसंभवा मुदः' इति माघः। सदाशिवार्थे 'तप' तपस्यां कुरु। तत्समीपे 'प्रसर्प' उपसर। तदन्तिकम् 'अय', उपगच्छ। सदाशिवप्रसादनाय 'ईह' ( ईहस्व, चेष्टस्व ) । अथवा वाञ्छ। तत्सेवायै 'सज्ज' संनद्धो भव। सदाशिवं 'नाध' ( नाथ, याचस्व ) । 'आधम–उद्भव' इति च्छेदे तन्नामानि 'आधम' शब्दायस्व, कीर्तय। सदाशिवस्य भक्त्ये 'उद्भव' निजं जन्म मानयेत्यर्थः। सदाशिवस्य सेवने एव आत्मानं 'प्रसाधय' अलंकुरु। सदाशिव 'रस' ( रसय–तत्रैव रसास्वादमनुभव ) अथवा 'रस' कीर्तय, 'रस शब्दे, भ्वादिः'। सदाशिवम् 'आवह' स्वसंनिकर्षे प्रापय। आनके जीवनदायके [ आनयति जीवयतीति आनकः, जीवकः तस्मिन्, 'अन–प्राणने' ] तव जीवनदायके सदाशिवे स्वं हृत् हृदयम् 'आवधान' आबद्धं कुरु, श्रीशंकरे हृदयं संयोजयस्व। श्लोकस्य साधारणतः सोयमर्थः स्यान्मम मतेरनुसारम्--ललाट( भाग्य )रूपचत्वरस्य आश्रयभूतः यः प्रकर्षः ( अभ्युदयः) तत्कारणात् मोदम् आनन्दम् आनय धारय। चारुचन्दिरे चारुः ( मनोहरः ) चन्द्रो यस्मिन् ईदृशे सदाशिवे प्रसर्प शरणं गच्छ। तादृशभगवत्प्रपत्त्या प्रभाहि प्रकृष्टभा ( शोभा )-युक्तो भव । माहि आनन्दोद्वेलतादशायामपि आत्मनि सुस्थिरो भव। मा तप, तापम् मा अनुभव! न अधमोद्भव! उत्तमकुलसंभूत ( हे सुजन ) इह अय गच्छ। अमृतं मोक्षं प्रसाधय प्रकर्षेण सिद्धं कुरु। हे रसावह! हे रसलोलुप! त्वं स्वकीयं हृद् हृदयं आनके सर्वभूतानां जीवके सदाशिवे आवधान आबद्धं कुरु। भगवद्भावनायां हृदयं संयोजयेत्याशयः ॥२०२—२०३॥

भवे तनुत निष्ठामातनु संतोषकारिणीः।
रुचीरायाथनोमुक्तिं चिदानन्दपदोज्ज्वलाम् ॥ २०४ ॥

भवे श्रीशिवे निष्ठां दृढां श्रद्धां तनुत कुरुत। आतनु शरीरान्तं यावत् ( यावद्देहस्थितिस्तावत् ) संतोषकारिणीः रुचीः तनुत कुरुत। आत्मसंतोषोत्पादिकाः इच्छाः एव कुरुत। आत्मसंतोषविरुद्धाः इच्छा एव मनसि न आनयत, अन्यथा [एतद्विरुद्धाचरणे]

चिदानन्दपदोज्ज्वलां चैतन्यानन्दस्थानप्राप्त्या उज्ज्वलां प्रशंसनीयां मुक्तिं ( मोक्षम् ) न आयाथ न प्राप्नुथ ॥२०४॥

गोविन्द मास्मदानन्दमंदिरानन्दमण्डन ।
विमुक्तिं भवतो नश्येद्भवतो विरुदं न चेत् ॥ २०५ ॥

क्रियागुप्तमाह—भवतः विरुदं 'भक्तवत्सलः, दीनदयालुः' इत्यादिप्रशंसासूचकमवदानम् ( कीर्तिः ) चेत् न नश्येत्तर्हि नन्दस्य ( व्रजगोष्ठाधिपतेः ) मन्दिरे आनन्दस्य ( प्रमोदस्य ) मण्डनभूत हे गोविन्द ! ( मह्यम् ) भवतः भवात् संसारात् विमुक्तिं मोक्षं मा स्म दाः मा देहि । दाधातोः स्मोत्तरो माङ् । अतएव 'स्मोत्तरे लङ् च' इति चात् लुङ् । 'न माङ्योगे' इति अडागमाभावः । भवतः दयानिधित्वादिविरुदस्य हानिर्न स्यात्तर्हि मह्यं संसारात् मोहं मा देहि । यदि तु स्वकीर्तिरक्ष्या भवतः कामनीया तर्हि मादृशाय दीनाय विमुक्तिमवश्यं दास्यसि, इति भावार्थः । क्रियागुप्तचमत्कारस्योदाहरणम् ॥२०५॥

तथामानाथ संसारं चरणौ भजतस्तव ।
यथा हृदि निजानन्दवृन्दं वितनुषे मम ॥ २०६ ॥

[ एतानि क्रियागुप्तानि ]

पुनः क्रियागुप्तमाह– हे नाथ ! तव चरणौ भजतः ( सेवमानस्य ) मम संसारं तथा 'अमाः' परिमितम् अकरोः यथा मम हृदये निजस्य आनन्दसमुदयं वितनुषे करोषि । मम संसारो भवता तथा कृतः यथा मम हृदये त्वद्भजनजन्यः आनन्दः समुत्पद्यते । तव चरणध्यानान्मम संसारेऽप्यस्मिन् आनन्दभरः स्वच्छन्दमुदेतीत्याशयः ॥२०६॥

अत नुहि तनु तस्य त्रस्य दीक्षाऽऽसुर स्य
प्रकट फल समस्योत्कर्ष हर्षाऽऽल यस्य ।
पदगुरुरतिमाया स्वाघ रूपाय दोषा—
श्रय हृदय जयार्हं नाम विष्णोर्गृहाण ॥ २०७ ॥

[ पूर्वभागे क्रियापदानि, उत्तरभागे तेषां कारकाणि ]

"श्लोकस्य पूर्वार्द्धे क्रियापदानि । उत्तरार्द्धे तेषां कारकाणि" इति ग्रन्थकारस्य मूलपुस्तके टिप्पणी । तदनुसारम्—अत, नुहि, तनु—इत्यादिक्रियासु—पद, गुण, रति—इत्यादिकारकाणि समन्वयन्ति । ततश्च—

पदं विष्णोः चरणम् अत शरणं गच्छ । 'अत—सातत्यगमने भ्वादिः' विष्णोः गुणान् नुहि ( स्तुहि ) । विष्णौ रतिं प्रीतिं तनु ( कुरु ) । मायां विष्णोः मायां तस्य उपक्षिपु [ दूरे कुरु, 'तसु उपक्षये' दिवादिः ] । स्वाघात् त्रस्य, निजकृतपातकात् त्रस्य बिभेहि । रूपाय दीक्ष ( दीक्षस्व ), रूपदर्शनार्थं दीक्षां गृहाणेत्यर्थः । अयाय शुभविधये आसुर दीप्तः ( दीप्तिशाली ) भव । 'अयः शुभावहो विधिः' इत्यमरः । 'षुर दीप्तौ' तुदादिः । दोषान् स्य नाशय 'षो अन्तकर्मणि' दिवादिः । आश्रयं प्रकट, प्रकर्षेण वृणु । 'कटे वर्षावरणयोः' भ्वादिः । हृदये फल फलितो भव । जयं समस्य ( उपक्षिप उपसंहर ) जयलाभार्थं यत् त्वं प्रपञ्चमारभसे तम् उपसंहरेत्याशयः । अर्हैः उत्कर्षयोग्यजनैः उत्कर्षं लभस्व । नाम्ना हर्ष, भगवन्नामग्रहणेन हृष्टो भव । विष्णोः नाम्ना अल भूषितो भव । 'अल—भूषणपर्याप्तिवारणेषु' भ्वादिः । गृहाणाय ( गृहस्व आणार्थं जीवनार्थं 'अन प्राणने' जुहोत्यादिः । ) यस्य प्रयत्नं कुरु ।

श्लोकस्य समन्वितोऽर्थस्तु—अतनुहितनुतस्य अतनवे महते हिताय हितलाभार्थं नुतस्य पूजितस्य । तथा त्रस्यदीक्षाऽसुरस्य त्रस्यन्तः त्रासं ( भयं ) प्राप्नुवन्तः, ईक्षामात्रेण [ ईक्षण ( दर्शन ) मात्रेण ] असुराः दैत्या यस्मात् तादृशस्य । यस्य विलोकनमात्रेण असुरा भीतभीता भवन्ति तादृशस्य । प्रकटफलसमस्य प्रकटं फले फलदाने समस्य समानस्य । दीने धनशालिनि चेत्युभयस्मिन् समानफलदायकस्य, भूतमात्रे समदर्शित्वात् । पुनः—उत्कर्षहर्षालयस्य, उत्कर्षस्य ऐश्वर्यस्य, हर्षस्य च आलयस्य स्थानभूतस्य । भगवानेव ब्रह्माण्डगत—ऐश्वर्यस्य, आनन्दस्य च आधारभूत इत्याशयः । पदस्य राज्याधुच्च—पदस्य, गुणानां विद्या—पराक्रमादीनाम्, रतेः कान्तादिविषयकप्रीतेश्च या माया ( पदादीनां लाभाय यो मोहः, अज्ञानम् ), सा मायैव स्वस्य अघं पातकम् तद्रूपाय ( पातकाय ) । अथवा—उच्चपदेषु—गुणेषु या रतिः प्रीतिः सैव माया ( मोहः ) एव स्वाघं निजं पातकं तद्रूपाय । तादृशमोहरूपनिजपातकनिवृत्तये इति यावत् । दोषाश्रय ! नानादोषाणाम् आश्रयभूत हे हृदय ! जयार्हं सर्वविधविजयदानयोग्यं श्रीविष्णोः नाम गृहाण जप । हे हृदय ! त्वं नानादोषाणामाश्रयोऽसि, अतएव सांसारिकदोषनिवृत्तये, ततः शाश्वत—

कल्याणलाभार्थं च जनैरर्चितस्य । दैत्यभयदूरीकारकस्य । सर्वेभ्यः शुभफलदायकस्य । ऐश्वर्य–आनन्दालयस्य । श्रीविष्णोः सर्वतो विजयप्रदं नाम जप, येन सर्वविधशुभफल-प्राप्तिरूपः ते विजयः अनायासं भवतीति सर्वस्याशयः ॥२०७॥

श्रीकण्ठः स्वभिरामनामसुखदः कामप्रदः सर्वदा
नन्दिस्थः सततं त्रिलोचनतया सर्वज्ञताभूषितः !
सानन्दो गिरिकूटवासनरुचिः प्रीतद्विजेन्द्रालिकः
श्रीमानेष सदाशिवोऽत्र विबुधश्रेणीषु संराजते ॥ २०८ ॥

श्लेषेण श्रीशंकरः, सदाशिवनामा पण्डितश्चेत्युभयं वर्ण्यम्—तत्र–श्रीमान् एष सदाशिवः श्रीशंकरः विबुधानां देवानां श्रेणिषु संराजते । तदेवाह–श्रीशंकरः श्रीकण्ठ इति ख्यातः 'उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्' इत्यमरः । स्वभिराम नामसुखदः सुतराम् अभिरामेण न म्नास्मरणकारकेभ्यो भक्तेभ्यः सुखदः । कामस्य कामदेवस्य प्रकर्षेण दः ( खण्डन–दहनकारकः ) 'दो अवखण्डने, दाप् लवने' वा । नन्दिस्थः तन्नामके वृषे स्थितः । त्रिलोचनतया सर्वज्ञतया च भूषितः । स्वात्मारामतया सानन्दः । कैलासरूपस्य गिरेः वासने वासेन अलंकरणे रुचिः प्रीतिर्यस्य । प्रीतः (बालतया कलात्रयरूपभयनिवृत्त्या प्रसन्नः ) यो द्विजेन्द्रः चन्द्रः सः अलिके ललाटे यस्यः सः ।

सदाशिवनामा कश्चित्पण्डितस्तु–श्रिया शोभया युक्तः कण्ठो यस्य [ सुकण्ठः, विद्वत्तया सुमुख इति तात्पर्यम् ] । 'सदाशिवः' इति सुन्दरनाम्नैव सर्वेषां सुखकारकः । कामप्रदः सर्वदैव लोकानां कामानाम् अभिलाषाणां दायकः पूरकः । सर्वदाऽऽनन्दिस्थः सर्वदा आनन्दिषु प्रसन्नचित्तेषु जनेषु स्थितः । त्रिलोचनतया द्वे लोचने दृश्यमाने, एक लोचनं च शास्त्रमिति त्रिलोचनतया, विद्वानयं सर्वज्ञतया च भूषितः । गिरिशिखरे निवासने रुचिः अभिलाषः यस्य सः । प्रीतद्विजे० प्रीता प्रसन्ना द्विजेन्द्राणां ब्राह्मण–श्रेष्ठानाम् आलिः पङ्क्तिः ( समुदायः ) यस्मात् तादृशः । ब्राह्मणजनानां सर्वदा संतोषकर इत्याशयः । ईदृशः सदाशिवः विबुधानां पण्डितानां श्रेणीषु संराजते ॥२०८॥

सत्यं नाम सदाशिवस्त्वमुदयद्भागीरथीसंश्रयः
श्रेयो भूमिसुपर्वणां गिरिजया नन्देन युक्तः सदा ।
प्रोद्दीप्तत्रिपुरप्रतापमहिमा सन्मन्त्रिणां वल्लभ–
स्तारस्फारतरप्रसारविदितो धर्माधिनन्दिप्रियः ॥२०९॥

सत्यमिदं यत् त्वं सर्वदा कल्याणकारकः । उदयन्त्याः उपरितः आगच्छन्त्याः गङ्गायाः आश्रयः । भूमेः ( पृथिव्याः ) सुपर्वणां देवानां च श्रेयः, कल्याणस्वरूपः । गिरिजया श्रीपार्वत्या ( श्रीपार्वत्याः कारणात् ) आनन्देन युक्तः । प्रोद्दीप्तेषु भालस्थ-वह्निना दग्धेषु त्रिपुरेषु ( तन्नामकाऽसुरेषु ) ( प्रथितः ) प्रतापस्य महिमा माहात्म्यं यस्य तादृशः । सतां मन्त्रिणां मन्त्रसाधकानां कामपूरकत्वात् वल्लभः प्रियः । तारेण दीर्घतया व्याप्तेन, स्फारतरेण अतिस्फीतेन, प्रसारेण ( सर्वतः प्रसिद्ध्या ) विदितः सर्वजगत्सु परिज्ञातः श्रीशंकरः ।

सदाशिवनामा पण्डितस्तु—सदा शिवः कल्याणकारकः । उदयन्त्याः समीपे वसन्त्या भागीरथ्याः संश्रयो निवासो यस्य, गङ्गातटस्थप्रान्तवासीत्यर्थः । भूमिसुपर्वणां ( भूदेवानां ब्राह्मणानां ) श्रेयः कल्याणस्वरूपः । आराध्यया श्रीगिरिजया ( भगवत्या, एतत्कारणेन ) आनन्देन सदा युक्तः । प्रोद्दीप्तः सर्वतः प्रकाशितः त्रिषु पुरेषु जयपुरो दयसपुरजोधपुरेषु प्रताप( प्रभाव )महिमा यस्य सः । पूर्वोक्तेषु त्रिष्वपि पुरेषु जना यस्य राजपूजितत्वादिप्रभावमाहात्म्यं जानन्तीत्याशयः । सतां मन्त्रिणां राज्ञोऽमात्यानां प्रियः । तारः दीर्घः स्फारतरः अतिनिर्मलश्च यः प्रसारः परितः कीर्तिप्रसरणं, तेन प्रसिद्धः । धर्माधिनन्दिनां धर्माश्रयतः आनन्दिनां [ धार्मिकाणाम् ] जनानां प्रियः । अथवा 'धर्माधिकारि' इति जात्यां प्रसिद्धः तस्य प्रियः । इति ( सर्वम् ) नाम ( किल ) सत्यम् उपपन्नमस्ति ॥२०९॥

**माधवेन्द्रद्विषत्कान्ताकुचौ ताडनमेचकौ ।**
**शैलाविव वहन्तौ स्वां मेघच्छन्नामधित्यकाम् ॥ २१० ॥**

माधवेन्द्रस्य वैरिस्त्री—स्तनौ निजदयितवियोगवेदनया यत्ताडनं ( वक्षसः ) कुट्टनं तेन मेचकौ श्यामौ । अत एव मेघैः आच्छादितां स्वकीयाम् अधित्यकाम् ऊर्ध्वभूमिं वहन्तौ शैलौ पर्वतौ इव स्तः । शिखरेषु तिष्ठद्भिः सजलैः मेघैः श्यामाम् ऊर्ध्वभूमिं वहन्तौ यथा पर्वतौ भवतः तथा पतिवियोगताडनात् श्यामौ इमौ स्तनौ पर्वताविव विशालौ स्तः ॥२१०॥

**माधवेन्द्र भवत्कीर्तौ यानशय्याऽऽलयाशया ।**
**आरोढुं शयितुं स्थातुं वाञ्छन्ति त्रिदशास्त्रयः ॥ २११ ॥**

हे माधवेन्द्र ! भवतः कीर्तौ ( शुभ्रे यशसि ) त्रयः त्रिदशा देवाः [ ब्रह्म–विष्णु–महेशाः ] यानस्य रथस्य, शय्यायाः, आलयस्य गृहस्थानस्य आशया–आरोहणाय, शयनाय, उपवेशनाय च इच्छन्ति । ब्रह्मा श्वेतां कीर्तिं विलोक्य स्वयानस्य हंसस्य भ्रमेण आरोढुमिच्छति । शेषनागभ्रमेण विष्णुः शयितुं वाञ्छति । शंकरस्तु श्वेतकैलासभ्रान्त्या कीर्तौ स्थातुं वाञ्छतीत्याशयः ॥२११॥

**सखि न वनवादरोऽपि प्रथितो वनवादरोपीह ।**
**भूयो ननन्दनन्दनगीतोपि सनन्दनन्दनसुगीतः ॥ २१२ ॥**

सखि स कृष्णाः नित्यनवेन आदरेण युक्तोऽपि वनवादस्य आरोपी 'वनविहारः अतिहितकृत्' इति वनवादस्य स्थापकः ( आरोपी ) । यः न वनवादरोपी ( वनवादरोपित्वेन न प्रथितः ) सः वनवादरोपी कथं स्यादिति विरोधः । 'नव–नवादरोऽपि' इति तत्परिहारः । नन्दनानि आनन्दजनकानि गीतानि यस्य सः नन्दनगीतः, ततो नन्दनगीतः सः नन्दनन्दनेन श्रीकृष्णेन सुगीतः प्रशंसितः सन् ननन्द आनन्दितो बभूव । अन्यैः प्रशस्तोऽपि सुबल–सुदामादिः कश्चित् श्रीकृष्णसुहृत् आनन्दजनकगीतोऽपि सन् नन्दनन्दनेन श्रीकृष्णेन यदा श्लाघितः, तदैव ननन्द आनन्दमनुभूतवान् । यः न नन्दनन्दनगीतः अर्थात् नन्दनन्दनेन न गीतः सः नन्दनन्दनसुगीतः [ नन्दनन्दनेन सुष्ठु यथा स्यात्तथा गीतः प्रशस्तः कथं स्यात् ? ] इति विरोधः । नन्दनगीतः आनन्दजनककीर्तिः सः नन्दनन्दनेन श्रीकृष्णेन सुगीतः, इति तत्परिहारः । ततश्च विरोधालंकारः सोयम् ॥२१२॥

**सदामोदरतो नुत्यः सदामोदरतो भवः ।**
**सदामोदरतोपास्यः सदामोदरतोरगैः ॥ २१३ ॥**

तत्सु आमोदेन आनन्देन रतः अर्थात् सतां भक्तानां मध्ये आनन्देन प्रसन्नः यः भवः ( शिवः ) सः दामोदरतः श्रीकृष्णतः श्रीकृष्णद्वारा नुत्यः स्तवनीयः अस्ति । तृतीयार्थे सार्वविभक्तिकस्तसिः । सः शिवः आत्मारामत्वात् सदा आमोदे रतैः [ अर्थात् आत्माऽऽनन्दनिर्भरैः ] योगिभिः उपास्यः, तथा तस्य शिवस्य उरगैः सर्पैः सदामोदरता दामोदरसमानता [ दामोदरेण समानः सदामोदरः, तद्भावः सदामोदरता ] समानस्येति योगविभागात् समानशब्दस्य 'संभाव': ॥२१३॥

**अत्रिलोचनजभृत्त्रिलोचनो नाकपालभृदहो कपालभृत् ।**
**उग्रहाऽपि यदनुग्रहाऽऽकृतिः शं करोतु मम शंकरोऽतुलम् ॥ २१४ ॥**

श्रीशंकरः—अत्रिमहर्षेः लोचनात् जातः, अतः अत्रिलोचनजः चन्द्रः तं बिभर्ति तादृशः सन्नपि त्रिलोचनः त्रिनेत्रः । यः अ(न)त्रिलोचनजभृत् सः त्रिलोचनः ( त्रिलोचनभृत् ) कथं स्यादिति विरोधः । अत्रि–लोचन-जातचन्द्रधारकोऽपि सः त्रिलोचनयुक्तः इति तत्परिहारः । कपालभृत् कपालधारकोऽपि सः शिवः नाकपालस्य इन्द्रस्य भृत् ( भरणकारकः ) । उग्राणां प्रचण्डानां दैत्यानां हननकर्ताऽपि सः ( शिवः ) सत्सु अनुग्रहस्य कृपायाः कारिणी आकृतिः मूर्तिर्यस्य तादृशः । भगवान् शंकरः लोकानां कृते उग्राणां संकटकारिणां दैत्यानां हन्ताऽपि सन् सत्सु देवमुनिगन्धर्वादिषु अनुग्रहकारिमूर्तिधारकः [ दयालुस्वभावः—सौम्यमूर्तिधारकः ] । ईदृशः शंकरः मम अतुलम् असदृशम् ( अत्यन्तम् ) शं कल्याणं करोतु । 'शंकरोतु शं करोतु' इति यमकम् । ततश्च विरोधेन सह यमकस्य संसृष्टिः ॥२१४॥

**श्रीमन्माधवभूमिपाल ! तव निष्कङ्कं निरङ्कं यशः**
**शंसद्विष्णुरपि प्रयातु समतां किं नाम दोषाकरः ।**
**स्यात्तद्विन्ध्यमहीध्रभृङ्गविचरत्त्वद्वैरियोषादृशो—**
**राक्षेपाय पतेत्प्रसह्य यदि तत्सङ्गी कुरङ्गीशिशुः ॥ २१५ ॥**

हे माधव भूमिपाल ! तव यशः निष्कङ्कं ( निष्कण्टकम् निरवकरम् ), निरङ्कं निश्चिह्नं च अस्ति [ श्वेते यशसि, कीदृशोऽपि अङ्कः 'दाग, धब्बा'दिकं नास्ति ] । शंसद्विष्णुः विष्णुं स्मारयन्नपि दोषाकरः, दोषाणामाकरः [ वास्तवे तु दोषायाः रात्रेः कारकः ]चन्द्रः किं तस्य समतां प्रयातु ? अपितु न । यतो हि चन्द्रोपि 'विधुः' [ विरहिणो विध्यतीति विधुः ] इत्युच्यते । एवं 'विधुः श्रीवत्सलाञ्छनः' इति विष्णुरपि कोषेषु 'विधुः' इत्युच्यते । इति नामसाम्येन विष्णुं सूचयन्नपि चन्द्रः तव यशसः साम्यं प्रयातु किम् ? नैतत्संभवेत् । यतो हि स दोषाकरः । किंतु 'स्यात्', इदं संभवेत्—यदि तत्सङ्गी तस्मिन् चन्द्रे स्थितः अङ्कत्वकारकः मृगशिशुः तव वैरिरमणीदृशोरुपरि आक्षेपाय आक्रमणाय पतेत्, चन्द्रं च स्वेन शून्यं कुर्यात् । एवं सति चन्द्रस्यापि मृगराहित्ये निरङ्कत्वात् इदं साम्यं स्यात् । ननु वैरियोषा( रमणी )णां दृशोः ( नेत्रयोः ) उपरि चन्द्रस्थितमृगशिशोः पातः कथं स्यादिति चेत्, शृणु, त्वत्पराक्रमेण पराजिता वैरियः

स्वनगरं परित्यज्य भीताः सन्तः विन्ध्यगिरिवनेषु भ्रमन्ति । तासां योषा अपि भीरुस्वभावाः स्वरक्षणाय विन्ध्यगिरिशिखरेषु भ्राम्यन्ति । ततश्च गगनचुम्बिषु विन्ध्य-शिखरेषु स्थितानां तासां रमणीनां नेत्राणि मुग्धकुरङ्गीवत् सन्ति । अत एव स्वनेत्रशोभाऽपहरणेन ईर्ष्याकषायितो मृगशिशुः चन्द्रस्योत्सङ्गं विहाय यदि रमणीनेत्रयोः पतेत्तर्हि मृगशून्यश्चन्द्रः निरङ्कत्वात् तव यशसः साम्यं लभेत । इति सर्वस्याशयः ॥ २१५

निमग्नतां हरेः पादतरौ तरणसाधने ।
मज्जेत्कथं हरेः पादतरौ तरणसाधने ॥ २१६ ॥

हे भगवन् मम संसारेऽस्मिन् या निमग्नता [ अत्यन्तं संलग्नता ] तां तरणसाधने संसारसमुद्रादुत्तरणसाधने तव पादतरौ चरणरूपकल्पवृक्षे हरेः आकर्षेः । मम आसक्तिं तव चरणं प्रति आकर्षेः, यतो हि सः संसारात् तरणस्य उपकरणम् । कश्चित् पदार्थः तरणस्य साधने प्लवनस्य असाधारणोपकरणे हरेः पाद( चरण )रूपायां तरौ ( तरणौ, नौकायाम् , 'स्त्रियां नौस्तरणिस्तरिः' अमरः ) (वर्तमानायाम्) कथं मज्जेत् , अपितु न मज्जेत्, इत्याशयः । पूर्वार्द्धे हरेरिति क्रियापदम् । 'तरौ' इति तरुशब्दस्य सप्तम्येकवचनम् ॥२१६॥

जितेन्द्रियस्य पुंसः स्यान्न मनस्तरुणीकटौ ।
सत्यमाभाति तरुणीकटौ कस्य मनो भवेत् ॥ २१७ ॥

जितेन्द्रियस्य पुंसः ( पुरुषस्य ) तरुण्याः कटौ श्रोणिभागे मनः न स्यात् । जितेन्द्रियः पुरुषो रमण्या अङ्गेषु न आसज्यते इत्याशयः । पूर्वोक्तमिदं कथनं सत्यमस्ति, यतः रमणीरूपे कटौ कटु( तिक्त )पदार्थे कस्य मनः स्यात् । कटुपदार्थे को वा विवेकी अभिरोचयेत् ? पूर्वार्द्धे 'कटि' शब्दस्य सप्तम्येकवचनम् , उत्तरार्द्धे तु कटुशब्दस्य, इति वर्णश्लेषः ॥२१७

मधव्यञ्जनसंजातविपर्ययविचालनम् ।
मर्मधर्मकृतिर्यस्य शर्मेहाऽमुत्र सोऽश्नुते ॥२१८॥

'म--ध' इति व्यञ्जनयोः संजातस्य विपर्ययस्य [ विपरीतक्रमस्य ] विचालनं विपरीतकरणं यस्य पुरुषस्य मर्मधर्मकृतिः अस्ति, स पुरुषः इह, अमुत्र परलोके च शर्म सुखम् अश्नुते अनुभवति । अर्थात्-'मर्मधर्मकृतिः' अस्मिन् पदे मकार-धकारव्यञ्ज-

नयोः विपर्ययः पूर्वपश्चाद्भावोऽस्ति, यस्तु पुरुषः विपर्ययस्य विचालनं विरुद्ध-चालनम् अर्थात् तस्य विपरीतक्रमस्य अनुकूलं क्रमं करोति-पुनर्यथावद्भावं करोति, सः इहलोके परलोके च सुखं प्राप्नोति । मकारस्य स्थाने धकारं करोति, तेन 'धर्म--मर्म कृतिः' इति जातम् । ततश्च-यस्य कृतिः धर्मस्य मर्मस्वरूपा तत्त्वभूता भवति स एव उभयलोके सुखभाग् भवति । यतो हि धर्ममर्म अर्थात् 'धर्मस्य मर्म तत्त्वं किमस्ति ?' इति प्रश्नस्य सः उत्तरं ददाति 'कृतिः' अर्थात् काय परिणामनमेव धर्मस्य तत्त्वमस्ति । केवलं मनसि विचारणं, मुखात् कथनं वा, धर्मकृतिः धर्मस्य मर्म तत्त्वं नास्ति । तथा च "यस्य धर्ममर्म कृतिः, काय परिणमनं 'कर्मयोगः," सः उभयत्र सुखाधिकारी । 'यस्य मर्म अर्थात् संसारे तत्त्वं धर्मकृतिः धर्मकार्यकरणमिति विचारः, सः तथा पुण्याधिकारी न भवतीति सर्वस्याशयः ॥२१८॥

श्रीमान् श्रीमाधवत्वं ससकलसुखदः कीर्तिगायित्रजानां
क्षोणीकल्पद्रुरेको य इह सुसुलभः सत्वया यित्वकानाम् ।
वीरो धीरः प्रसन्नो यतनसमुदयः सज्जयार्थित्रजानां
भूयाः पद्मापतिश्रीललितविलसितस्तिग्मतेजः स्वभासा ॥२१९

(अत्र बहूनि छन्दांसि निःसरन्ति)

अरातिभूरितापदोऽपि रातिभूरितापदो
नवाजिलब्धसज्जयोऽपि वाजिलब्धसज्जयः ।
नदीनमानवारणोऽपि दीनमानवारण-
स्त्वमद्भुतं तनोषि तन्महीन्द्र माधवप्रभो ॥ २२० ॥

अरातीनां शत्रूणां भूरि(बहु)तापदायकोऽपि यः 'रातिभूः, इतापदः' ; रातेः दानस्य [ रातिः दानम् 'रा'धातोः क्तिन् ] भूः भूमिः अर्थात् वितरणस्य स्थानम् । इताः गताः दूरीभूताः आपदाः [आपन्तः] यस्मात, आपद्रहितः [सर्वसंपत्सहितः] । नवाः याः आजयः (युद्धानि, समराः) 'समित्याजिसमिद्युधः' इत्यमरः, तासु लब्धः सन् प्रशंसनीयः जयः येन तादृशः । अर्थात् नित्यनवीनेष्वपि युद्धेषु येन सर्वप्रशंसनीयो विजयः प्राप्तः इत्याशयः । ईदृशः सन्नपि वाजिना अश्वेन लब्धः सन् जयः येन, अर्थात् वाजिमात्रोप-करणोऽपि वीरतया महान्तं विजयं लब्धवान् । नदीनाम् इनः स्वामी समुद्रः, तस्यापि मानं संमानं, परिमाणं वा निजगंभीरतया वारयति, समुद्रतोऽपि गभीर इत्याशयः, । एवंविधोपि

दीनानां दरिद्राणां मानं मितिं संख्यां वारयति निवारयति, अर्थात् दानिना येन दीनानां संख्यैव निवारिता । सर्वेऽपि दीनाः येन धनिनः कृताः । तस्मात् हे माधवेन्द्र ! त्वम् अद्भुतम् आश्चर्यकार्यं करोषि । अरातिभूरितापदः सः रातिभूरितापदः, न वाजिलब्ध-सञ्जयः वाजिलब्धसञ्जयः, नदीनमानवारणः सः दीनमानवारणः कथं स्यात् ? इति प्रत्यक्ष-विरोधः, किन्तु उपर्युक्तप्रकारेण भवान् आश्चर्यं करोति । विरोधालंकारः ॥ २२०

विहारभासुरोचितोपि हारभासुरोचितो
　　नवालकव्रजाननोऽपि बालकव्रजाननः ।
ननन्द गोपयःप्रियोऽपि नन्दगोपयःप्रियो
　　नदानवर्द्धिधीरपीह दानवर्द्धिधीरसि ॥ २२१ ॥ (विरोधाभासः)

विहारेण विलासक्रीडया भासुरः दीप्तिशाली, तथा उचितः, सर्वथा समञ्जस-कारी, एवं सन्नपि हारस्य मौक्तिकहारस्य भया प्रभया सु ( सुतराम् ) रोचितः शोभितः । 'स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः' कोषः । नवः अलकव्रजः (केशसमूहः) आनने यस्य, ईदृशः सन्नपि बालकव्रजस्य बालकसमूहस्य आनन(मुख)भूतः । सर्वेषां व्रजस्थबालकानां नायक इत्याशयः । यः न नन्दगोपयःप्रियः स्यात् सः नन्दगोपयः प्रियः कथं स्यात् ? इति विरोधः । किन्तु—ननन्द इति पृथक् । ततश्च गो-पयसः गो-दुग्धस्य प्रियोऽपि यः नन्दनामकस्य व्रजपतेः गवां पयसः प्रियः [ नन्दधेनूनां दुग्धपानस्य प्रियः ] नन्दस्य गवां दुग्धपानम् अभिरोचयति । स श्रीकृष्णः ननन्द आनन्दम् अनुभूतवान् । न दानवर्द्धिधीः दानवानां दैत्यानाम् ऋद्धौ समृद्धौ धीः बुद्धिः न अस्ति । अथवा दानवानाम् ऋद्धिं ध्यायति सः दानवर्द्धिधीः ( ध्यायतेः क्विप् ) यः तथा न, स न दानवर्द्धिधीः । एवं सन्नपि दानवर्द्धिनी ( दानं वितरणं वर्द्धयति ) तादृशी धीः बुद्धिर्यस्य तादृशः न असि । अत्रापि विरोधः ॥२२१॥

नास्ति यः स तु तवास्त्वसमस्तो भूय एव स तवाऽस्तु समस्तः ।
तावुभौ खलु परस्परहेतू स्तां महीभृदसमस्तसमस्तौ ॥ १२२ ॥
उदयाचलमारुह्य स्थित्वा चन्द्राङ्क ओकसि ।
अस्ताचलस्य दूरात्त्वं शशशृङ्गं विलोकय ॥ २२३ ॥ (समस्या)

'शशशृङ्गं विलोकय' इति असंभवार्थविषयिका समस्या । एतस्याः पूरणमसं-भवार्थविषयमेवाऽऽदाय ग्रन्थकृता कृतम् । तथा हि—उदयाचल—अस्ताचलौ हि 'यस्मिन्

क्षितिजे सूर्य उदयन् दृश्यते स गगनविभागः उदयाचलः,' 'यत्र चास्तं गच्छन् लक्ष्यते स च अस्ताचलः' इति विदुषां कल्पना । ततश्च यः असंभूतः, केवलं कल्पितः, तस्मिन् आरुह्य—कविकल्पिते चन्द्रस्य अङ्करूपे ओकसि स्थाने स्थित्वा--अस्ताचलस्य ( कल्पित-मात्रस्य ) दूरात् त्वम् असंभूतं शशशृङ्गं विलोकय--इत्याशयः । यदि तु चन्द्रबिम्बस्थितस्य शशस्यैव शृङ्गं दर्शयितुमिष्टं तर्हि--चन्द्राङ्कः शशरूप एव । तस्मिन् स्थित्वा पुनः कस्य शशस्य शृङ्गं विलोक्यताम् , इति पुनराश्चर्यार्थकल्पनेत्याकूतं स्यात् ॥२२३॥

त्वन्नामस्मरणे नाथ यः स्यादचलसंवृतः ।
तस्यार्थपुण्यपापानां यः स्यादचलसंवृतः ॥ २२४ ॥

हे नाथ त्वन्नामस्मरणे यः ( भक्तः ) अचल( पर्वत )वत् संवृतः गूढी-कृतेन्द्रियः स्यात् । अथवा अचलेषु पर्वतेषु गुप्तः स्यात् [ एकान्तवासी स्यात् ] तस्य पुरुषस्य अर्थानां पुण्यानां पापानां 'यः' ( यकारः ) क्रमेण अकारेण, चकारेण, लकारेण च संवृतः ( युक्तः ) स्यात् । अर्थानाम् 'अयः' [ आगमनम्—'अयः शुभावहो विधिः' ], पुण्यानां चयः संचयः, पापानां लयः स्यादिति तात्पर्यम् । 'यः अचलसंवृतः स्यात्' इत्यन्तर्लापिका । यः स्यादित्यादि द्वितीयश्चतुर्थेन चरणेन यम्यते इति यमकम् ॥२२४॥

जय शोभासम्पत्संशोभित लक्ष्मीरमण हरे ।

भुजदण्डस्फुरदुद्दण्डद्युतिमण्डित विद्युच्चण्डद्योतितकरवालकरालाकलनकला-पटुपाणे। खलयवनमहाबलपालप्रमथनशक्तसुभीमाकृतिविशेष कल्किनरेश श्रीशेषप्रणत हरे । कलुषभीतमुनिजनगीत त्रिभुवनैकधामोदीत श्रुतिगञ्जनभञ्जनरञ्जिपुरन्दरादिक लेख श्रीचेतोरमणसुरेखस्फुटकिरीटजटितविशालप्रचुरहीररुचिविस्फुरणक्षणविनष्ट-तिमिरसमूहप्रविततजनरञ्जनबहुलप्रभावविस्तार प्रसभातिप्रणताखिलदैवतविनोदिसद्-गुणजालस्फुरदखर्वपर्वोदितशीतलमयूखमञ्जुलगानत्रिभुवनमण्डन रिपुभण्डन जग-दघखण्डन रणचण्डनसमुदित गुणगणवरधामस्वामिन् भवतरणतरे ॥ २२५ ॥

[ प्रबन्धोऽयं तेनैव न पादनियमः । अपितु तालानुसरणम् ]

कल्किनः स्तुतिः—शोभाभिः ( विविधाभिः ) संपद्भिश्च संशोभित ! भुजदण्डयोः स्फुरन्ती या उद्दण्डा ( अदमनीया ) द्युतिः तया मण्डित ! विद्युदिव प्रचण्डं यथा स्यात्तथा द्योतितः चमत्कृतः यः करवालः खड्गः तस्य कराला भीषणा या आकलनकला भ्रमण-

चातुरी तस्यां चतुरः करः ( पाणिः ) यस्य, करेण खड्गभ्रामणपटो ! इत्यर्थः । खलयवनानां दुष्टम्लेच्छानां महान्तो ये सैन्यपालाः तेषां प्रमथने ( नाशने ) शक्त ! अतिभीमः आकृतिविशेषो यस्य [ तत्संबुद्धिः ] । श्रिया लक्ष्म्या शेषेण च प्रणत ! पापेन भीतैः मुनिजनैः गीताः, त्रिभुवनरूपे एकस्मिन् भुवने उदीताः प्रकटिताः [ 'ईङ्-गतौ' अस्मात् क्तिन् । 'उदीता दुग्धाब्धेः कुवलयपरीतापशमनी' इति वेंकटाध्वरी ] याः श्रुतयः (वेदाः) तासां गञ्जन( खण्डन ) कारिणां म्लेच्छानां भञ्जनेन रञ्जिताः अनुरक्तीकृताः पुरन्दरादिकाः लेखाः ( देवाः—'लेखा अदितिनन्दनाः' ) येन तत्सं० ! श्रियाः लक्ष्म्याः मनोरञ्जनकारिणीभिः सुन्दराभिः रेखाभिः [ रचनाभिः ] स्फुटं प्रकाशितं यत्किरीटं ( मुकुटविशेषः ) तत्र जटिताः खचिताः विशालाः प्रचुराश्च ये हीराः ( हीरकाः, मणयः ) तेषां रुचिविस्फुरणेन कान्तिप्रसरणेन क्षणादेव विनष्टः तिमिरसमूहो यस्मात् तादृश ! प्रविततानां ( परितः प्रसृतानाम् जनानां रञ्जनः बहुलश्च प्रभावविस्तारो यस्य तादृश ! प्रसभं ( बलात् ) प्रणतानि यानि समस्तदैवतानि (देवाः) तेषां विनोदकारकः सद्गुणजालः ( समूहः ) यस्य तादृश ! स्फुरन् दीप्यमानः, अखर्वः महान्, ( यतो हि ) पर्वणि पूर्णिमायाम् उदितः यः शीतलमयूखः ( चन्द्रः ) तद्वत् मञ्जुलं मनोहरं गानं ( कीर्तिगानम् ) यस्य ! त्रिभुवनानां मण्डन अलङ्कारभूत ! रिपूणां भण्डन ( तिरस्कारक, 'भडि परिभाषणे' 'तिरस्कारः' ) जगतः अघानां पापानां खण्डन ! रणे चण्डन (प्रचण्ड) समुदितानां गुणगणानां श्रेष्ठधाम(स्थान)भूत ! भवस्य संसारस्य तरणाय तरिः नौका, तत्सं-बुद्धौ हे कल्किनरेश !" "प्रबन्धोऽयं तेनैव न पादनियमः, अपितु तालानुसरणम्" इति ग्रन्थकर्तुष्टिप्पणी ॥ २२५ ॥

प्राकृतार्याः— घेत्तूण जाणसेज्जासदणं माहवनरिन्दकित्तीए ।
विहिहरितिलोअणाणं चडूढणसअणट्ठिअं सुहं भोदि ॥ २२६ ॥

संस्कृतम्— गृहीत्वा यान-शय्या-सदनं माधवनरेन्द्रकीर्तेः ।
विधिहरित्रिलोचनानाम् आरोहणशयनस्थितानि सुखं भवन्ति ॥ २२६ ॥

कीर्तेः सकाशात् यानम् ( वाहनम् ) शय्यां स्थानं च गृहीत्वा ब्रह्मादिदेवानाम् आरोहणशयनादीनि सुखपूर्वकं भवन्ति । कीर्तिः हंस—क्षीरसागर—कैलासवत् शुभ्रास्तीत्याशयः ॥ २२६ ॥

माहवणिवकित्तीओ फुल्लिअविअइल्लमालइवणाइं ।
सुअलक्कइमहुअराणं साणन्दविणोअकारणाइं धुअम् ॥ २२७ ॥

माधवनृपकीर्तयः फुल्लविचकिलमालतीवनानि ।
सकलकविमधुकराणां सानन्दविनोदकारणानि ध्रुवम् ॥ २२७ ॥

फुल्लानां विचकिलानां मालतीनां च वनानि । 'विचकिलं त्रिपुटा मल्लिका, दमनकं च' इति हेमचन्द्रः । कीर्तयः विचकिलादिवनसदृश्यः । शुभ्रास्तीत्याशयः ॥ २२७ ॥

सीमाहवणिवकित्ती रेहइ किर सुच्छसुच्छमं वसणम् ।
तस्स हि फुरदो जोण्हा भासइ गामीणथूलचेलं व्व ॥२२८॥

श्रीमाधवनृपकीर्तौ राजति किल स्वच्छसूक्ष्मं वसनम् ।
तस्य हि पुरतो ज्योत्स्ना भासते ग्रामीणस्थूलचेलमिव ॥ २२८ ॥

कीर्तिः स्वच्छं विशदं सूक्ष्मम् अतिलघु ( 'महीन' ) वसनं राजति [ कीर्तिः वसनम्, इति रूपकम् ] । ग्रामीणं ग्रामजातं स्थूलं वसनम् 'रेजा' इति राजस्थानभाषा', भासते प्रतीयते ॥ २२८ ॥

सरसगुणकव्वमज्झे जेत्ताओ सुकइकण्ठअम्मि संठविआ ।
तेत्ताणं उवमाणं तुमं सि माहव णरिन्द दप्पणओ ॥ २२९ ॥

सरसगुणकाव्यमध्ये यावत्यः सुकविकण्ठे संस्थिताः ।
तावतीनामुपमानां त्वमसि माधवनरेन्द्र दर्पणः ॥ २२९ ॥

रसैः गुणैश्च सहितस्य काव्यस्य मध्ये यावत्यः उपमाः सुकवीनां कण्ठे स्थिताः, तासां त्वं दर्पणः असि । ताः त्वयि सुस्पष्टं प्रतिफलन्ति, इत्याशयः । त्वं सर्वोपमाविराजमानोऽसीति तात्पर्यम् ॥ २२९ ॥

सूरो चन्दो इन्दो तुलासु माहवणिवेण संतुलिदो ।
अहि भुइ गुरुओत्ति तुमं लहुवा अण्णे दिअं जादा ॥ २३० ॥

सूर्यश्चन्द्र इन्द्रः तुलासु माधवनृपेण संतुलितः ।
(असि) अधिभुवि गुरुक इति त्वं लघवोऽन्ये दिवं याताः ॥ २३० ॥

तुलायां गुरुः पदार्थो नीचैस्तिष्ठति, लघुश्च उच्चैरुत्तिष्ठति । अधिभुवि स्थितस्त्वं सूर्याद्यपेक्षयापि गौरवभाजनमसीत्याशयः ॥२३०॥

माहवणरिन्द पुव्वससिणो राके व्व णम्मदा जाआ ।
तुह असिअणम्मदाए जादा जसपुण्णससिकोडी ॥ २३१ ॥

माधवनरेन्द्रपर्वशशिनो राकेव नर्मदा जाता ।
तव असिनर्मदाया जाता यशःपूर्णशशिकोटिः ॥ २३१ ॥

पर्वशशिनः पूर्णिमाचन्द्रात् राका इव यथा पूर्वं नर्मदा नदी उत्पन्ना । तथा तव खड्गरूपायाः नर्मदायाः सकाशात् यशोरूपाणां पूर्णचन्द्राणां कोटिः ( संख्याविशेषः ) उत्पन्ना । 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इति नर्मदोत्पत्तिं प्रति चन्द्रः कारणम् । अत्र तु कार्यात् नर्मदारूपात् कारणस्य शशिनः उत्पत्तिरिति कार्यात्कारण-जन्मरूपा षष्ठी विभावना । तत्राप्यतिशयः सोयं यत् न केवलमेक एव चन्द्रो जातः, अपितु चन्द्राणां कोटिसंख्येति ॥२३१॥

अरुणग्गमो व्व तिमिरं तुह लोअणकोणसोणदाभासो ।
माहवणरिन्द जुज्झम्मि ऐस णासेइ पडिवक्खम् ॥ २३२ ॥

अरुणोद्गम इव तिमिरं तव लोचनकोणशोणताभासः ।
माधवनरेन्द्र युद्धे एष नाशयति प्रतिपक्षम् ॥ २३२ ॥

अरुणस्य सूर्यस्य उदयः यथा तिमिरम् ( अन्धकारम् ) तथा तव लोचनकोणे शोणतायाः आभास एव ( स्वल्पा शोणता, अथवा नाममात्रार्थं रक्तताऽपि ) प्रतिपक्षं शत्रुं नाशयति । नेत्रशोणतया यत् किञ्चिदनुभाव्यमानोऽपि ते क्रोधः शत्रून् संहरतीति व्यङ्ग्यम् ॥२३२॥

माहवणरिन्द तुह करसमत्तकामो सुरद्दुमो तवइ ।
सुरणइकूलम्मि जडावक्कलसंभारएहिं आवरिओ ॥ २३३ ॥

माधवनरेन्द्र तव करसमाप्तकामः सुरद्रुमस्तपति ।
सुरनदीकूले जटावल्कलसंभारैरावृतः ॥ २३३ ॥

हे माधवनरेन्द्र ! तव करेण समाप्तः कामः मनोरथः [अर्थिनामभिलाषपूरणरूपः] यस्य, ईदृशः । अतएव जटावल्कलरूपैः संभारैः उपकरणैः आवृतः दिवि देवनदीतटे तपति ।

तपस्यां कुर्वन् जनः कञ्चिद्वरं लभते, तथा कल्पद्रुमोपि गङ्गातटे तपस्यन् हे माधवेन्द्र ! तवसदृशीं ततोऽधिकां वा कामपूरकतां लब्धुमिच्छतीति व्यङ्ग्येन माधवेन्द्रस्य दानवीरतातिशयो द्योत्यते ॥२३३॥

आणीदं विजआए माहव तुव कित्तिमुत्तियमणग्घम् ।
धरिऊण इक्ककण्णे पइट्ठिआ पव्वई हरद्धङ्गे ॥ २३४ ॥

आनीतं विजयया माधव तव कीर्तिमौक्तिकमनर्घम् ।
धृत्वा एककर्णे प्रविष्टा पार्वती हरार्द्धाङ्गे ॥ २३४ ॥

विजयया विजयादशम्या आनीतं कीर्तिरूपं मौक्तिकम् एकस्मिन् कर्णे धृत्वा, तादृशस्य मौक्तिकस्य द्वितीयस्य असंभवमालक्ष्य एककर्णघटिते हरस्य अर्द्धाङ्गे प्रविष्टा । विजयानाम्नी गौर्याः सखी, दशमी चात्र सुखं प्रतीयते इति सूक्तिचातुर्यम् ॥२३४॥

करतालणसामत्तं तुह रिउतरुणित्थणेसु दट्ठूण ।
उण्णअजलहरजालं महिहरसिहरम्मि को ण तक्केइ ॥ २३५ ॥

करताडनश्यामत्वं तव रिपुतरुणीस्तनेषु दृष्ट्वा ।
उन्नतजलधरजालं महीधरशिखरे को न तर्कयति ॥ २३५ ॥

प्रियतमवियोगदुःखात् कराभ्यां ताडनजन्यं श्यामत्वं दृष्ट्वा पर्वतशिखरे उन्नतं मेघसमूहं सर्वोऽपि जनः ऊहते । स्तनयोः पर्वतवद् विशालत्वं, वर्ण्यस्य विक्रमातिशयश्च ध्वन्यते ॥२३५॥

चक्कइभअहिसुकेर्हिं थणगइरोमालिवअणगहिआ गहणे ।
माहवणिव रिउनारी मुहकटिकचवलअमरगएँहि विमुक्का ॥ २३६ ॥

चक्रइभअहिशुकैः स्तनगतिरोमालिवचनानि गृहीतानि गहने ।
माधवनृपरिपुनारी मुखकटिकचवलयमरकतैर्विमुक्ता ॥ २३६ ॥

चक्रवाक–इभ (हस्ति) अहि (सर्प) शुकैः गहने (वने) माधवेन्द्रस्य रिपुनार्याः स्तन–गति–रोमालि–वचनानि गृहीतानि । चक्रवाकैः स्तनौ, इभैः गतिः [ मत्ततया गमनम् ] सर्पैः रोमराजिः, शुकैः आकर्षकं मधुरवचनं गृहीतम् ।

एवमेव–चक्रवाकैः वर्तुलं मुखम्, गजैः गमनसामयिकी कटिः, सर्पैः कचाः, शुकैः वलयस्थिता हरिता मरकतमणयो गृहीताः, ततश्च माधवेन्द्र–रिपुनारी एभिर्विमुक्ता ॥२३६॥

**प्रणमत निरवद्यनित्यलीलं व्रजललनाजन-जानकीललामम् ।**
**अभिनवजलदाभमप्रमेयं यदुरघुवंशविभूषणं महस्तत् ॥ २३७ ॥**

रघुवंशविभूषणं तत् महः ( तेजः ) श्रीरामचन्द्रम्, यदुवंशविभूषणं तत् महः ( तेजः ) श्रीकृष्णचन्द्रम् प्रणमत । द्वयोरेव निरवद्येत्यादिभिः चतुर्भिः विशेषणैः साम्यमाह–निरवद्या ( निर्दोषा ) नित्या च लीला ( क्रीडा ) यस्येति रामचन्द्रश्रीकृष्ण-चन्द्रयोः समानम् । श्रीकृष्णं व्रजललनाजनस्य ललामम् ( भूषणम् ), श्रीरामं जानक्या भूषणम् । अभिनवजलद ( मेघ )वत् आभा कान्तिः यस्य, अर्थात् श्यामवर्णम् । इति उभयत्र समानम् । अप्रमेयम् अज्ञेयम् [ वाङ्मनसाऽतीतमिति उपनिषदादिभिः सूचितम् ] उभयत्र समानमिदमपि ॥२३७॥

**भज भाव मोदयन्तं धुरि पुंसामसुसमं समुद्गीतम् ।**
**शोभितरमङ्गयुक्तं रुरुध्वजं गम्यमानदैत्यजयम् ॥ २३८ ॥**

हे भाव ! मोदयन्तं सर्वान् पुरुषान् शृङ्गारविलासैः प्रहर्षयन्तम् । पुंसां धुरि पुरुषाणामग्रभागे [ ये पुरुषत्वशालिनः तेषां पुरतः सर्वतोऽप्यधिकं ] असुसमं प्राणैः समानं संमाननीयम् । अतएव सर्वैरपि पुरुषत्वशालिभिः पुरुषकर्तव्यार्थं समुद्गीतं सर्वेषु काव्यादिषु कीर्तितम् । शोभि–तरम् अत्यन्तं शोभमानम्, [ शोभि इति णयन्तात् अतिशये तरप् ] अङ्गयुक्तं साङ्गम् । [ न तु अनङ्गम् ], गम्यमानः प्राप्यमाणः दैत्यानां जयो यस्मात् । दैत्यानां विजयाय स्त्रीसम्बन्धिनीं काञ्चित्कामवासनामवलम्ब्य देवैः साफल्यं लब्धम् । ततश्च दैत्यविजयः अस्मात् कामदेवात् एव प्राप्यमाण इति सूच्यते । ईदृशं रुरुध्वजम् ऋष्यकेतुम् भज सर्वप्रधानत्वेन आश्रय । 'ब्रह्मसूर्ऋष्यकेतुः स्यात्' इत्यमरः । ऋष्यश्च– 'एणः कुरङ्गमो रिष्यः स्याद्दृष्यश्चारुलोचनः' इति त्रिकाण्डशेषात् मृगवाची । एवं 'रुरुः' अपि 'कृष्णसाररुरुन्यङ्कु–रङ्कु–शम्बररौहिषाः' इत्यमरे मृगनामसु परिगणितः ।

द्वितीयोऽर्थस्तु—हे भाव ! हे बन्धो ! "क्रियालीलापदार्थेषु विभूतिबन्धुजन्तुषु, भावः" इति मेदिनी । मोदयं तं धुरिपुं, मकारस्य उदयः योगः यस्मिन् ईदृशं मोदयम्, अर्थात 'मकार' युक्तं 'धुरिपुं' । ततश्च मधुरिपुं भज । कीदृशं तम् ?, सामसु शाखायुक्तेषु सामवेदेषु समं तुल्यं यथा स्यात्तथा समुद्गीतं स्तूयमानम् । शोभितरमं शोभिता रमा

लक्ष्मीः यस्मिन्। गयुक्तं रुरध्वजम् अर्थात् गकारसंयुक्तं 'रुरध्वजं' ततश्च 'गरुर' ध्वजम्। श्लेषमार्गे रडयोरभेदः। तथा च गरुडध्वजम्, प्राप्यमाणो दैत्यानां जयो यस्मात् ईदृशम्। एवं च दैत्यारिं सामभिः समुद्गीतम् मधुरिपुं भज। इति सर्वसंकलितोऽर्थः॥ २३८॥

गोधूलौ धूलिधूम्राननरुचिररुचिश्चारयन् गाः समन्ता—
दूगोपालीजालपालीकलमुकुटधरो धारयन् धाम धन्यम्।
मन्यन्ते ब्रह्मसंज्ञं श्रुतिकुलतिलका यं वदन्तो नितान्तं
पायात्सायाह्नकाले कलिमलमथनो वाल्लभिर्विठ्ठलेशः॥ २३९॥

गोचारणवेलायाम्—गवां चरणन्यासैः गोधूलौ उड्डीयमानायाम्, धूलिभिः धूम्रा धूसरा [ धूसरवर्णा ] आननस्य रुचिरा रुचिः कान्तिः यस्य। सर्वतः गाः चारयन् वने तृण-भक्षणाय भ्रामयन्। गोपाली गोपानां या आली पंक्तिः तस्याः जालं समूहः, तस्य पाली पालकः ( पालयतेर्णिनिः )। तथा गाः पालयति पुं० गोपालः, स्त्री गोपाली गोपी (गोपस्त्री) तासां गोपालीनां ( गोपीनां ) जालं समूहं पालयति गोपीसमूहपालकः ( गोपीनाथः ) 'जालं समूह आनायगवाक्षक्षारकेष्वपि' इत्यमरः। कल( सुन्दर )मुकुटधारकः। धन्यं दुर्लभं धाम ( तेजः ) धारयन्। यं वदन्तः ( बोधयन्तः ) श्रुतिकुलतिलकाः वेदान्ताः वेद-बोद्धारो विद्वांसो वा, ब्रह्मसंज्ञं साक्षात् परं ब्रह्म मन्यन्ते। सः श्रीवल्लभस्य ( अपत्यं पुमान् ) तनयः श्रीविठ्ठलनाथः [ गोस्वामीति संप्रदाये प्रथितः ] कलिकालस्य दुरितानां दूरीकारकः सायाह्नकाले रक्षतात्। पुष्टिमार्गीयसंप्रदायाचार्यश्रीवल्लभाचार्यतनयः 'गुसांईजी' इति ख्यातः श्रीकृष्णस्वरूप इति भक्तानां भावनानुसारमेतत्॥ २३९॥

श्रीलश्रीलकदारिदावकरकव्याजव्रजध्यानतो
नव्याजप्रलनिस्वजस्वल्हसदः सन्यासयासक्षप।
गोपव्यापनयज्ञसज्ञसजितां तां तांबुजज्ञाजन
व्यामाव्यान् मधुबन्धुहासरसबन्धस्साधसामप्रम॥ २४०॥

अस्मिन् हारबन्धे।

श्रीश्रीकरिवरव्याप्तध्याता व्याघ्रनिजह्हदः।
न्यायात्तगोप्याऽनज्ञज्ञजितां बुज्ञानमामव॥ २४१॥

इतिअनुष्टुबाद्यन्तपुष्पाक्षरैर्निस्सरति।

२४० तमं पद्यं 'हारबन्धः'। अस्मिन् बन्धे मध्याक्षरं त्यक्त्वा आद्यन्तपुष्पाक्षरैः 'श्रीश्रीकरि०' २४१ तमम् अनुष्टुप्पद्यं निःसरति॥ २४१॥

बन्धस्योद्धारो न प्राचीनपुस्तके। अतएव अर्थोऽप्यनयोः पद्ययोः पाठकमहाभागै-रेव उन्नेयः।

मध्यपुष्पं त्यक्त्वा बन्धनाम च।

**तवामी नवामीलदम्भोजभासो महाशोचनामोचना लोचनान्ताः।**
**अकम्पानुकम्पासमुद्रा मम द्रागभद्राणि रुद्राणि विद्रावयन्तु ॥ २४२ ॥**

न मीलन्ति संकुचन्ति यानि अम्भोजानि ( कमलानि), नवानि (सद्यस्कानि) च तानि। ततश्च नवाऽमीलदम्भोजानि कमलानि, तद्वत् भाः ( कान्तिः ) येषाम् ते। नवीन-प्रफुल्लकमलवत् कान्तिशालिनः। महद् यत् शोचनं (शोकः) तस्य आमोचनाः दूरीकारकाः। पुनः अकम्पायाः सुस्थिरायाः [ सर्वदा स्थायिन्याः ] अनुकम्पायाः ( दयायाः ) समुद्भूताः, तव अमी लोचनान्ताः कटाक्षाः, रुद्राणि भीषणानि मम अभद्राणि अमङ्गलानि ( दुरितानि) द्राक् झटिति विद्रावयन्तु नाशयन्तु। भगवन्तं प्रति सविनया प्रार्थना ॥ २४२ ॥

**अयं नन्दबालः सदालापशाली किशोराकृतिर्नीलपङ्केरुहश्रीः।**
**धृतो येन गोवर्द्धनाद्रिः कराग्रे गवां पालकः पातु लम्बालकस्त्वाम् ॥ २४३ ॥**

सद्भिः उत्तमैः मधुरतया आकर्षकैः आलापैः शोभमानः। नीलकमलवत् मेचकमधुरा श्रीः शोभा यस्य। लम्बालकः प्रलम्ब( कुञ्चित )केशः गवां पालकः अयं नन्दबालः ( श्रीकृष्णः ) त्वां पातु ॥ २४३ ॥

**दलत्कुन्ददन्तश्चलत्तुन्दमन्तर्वलत्सुन्दरोद्दण्डशुण्डाऽभिरामः।**
**अलं बोधहेतोर्विलम्बो न यस्मिन् स लम्बोदरो मङ्गलं वो विधत्ताम् ॥२४४॥**

यस्मिन् कर्मणि दलत् ( विकसत् ) कुन्दपुष्पवत् दन्तो यस्य सः। चलत् स्थूल-तया कम्पमानं तुन्दं ( स्थूलमुदरं ) यथा स्यात्तथा। अन्तः अभ्यन्तरभागे वलन्ती [ आमोटिता ] सुन्दरा उद्दण्डा ( वैरिणां कृते प्रचण्डा ) या शुण्डा ('सूँड') तया अभि-रामः सुन्दरः। अलं पर्याप्तं यथा स्यात्तथा, बोधार्थं ज्ञानप्रदानार्थं यस्मिन् ( गजानने ) विलम्बः कालक्षेपो नास्ति, ईदृशः सः लम्बोदरः गणेशः वः मङ्गलं विधत्तां करोतु ॥२४४॥

**ज्वलतु जलधिक्रोडक्रीडत्कृपीटभवप्रभा—**
**प्रतिभटपटुज्वालामालाकुलो जठरानलः।**

तृणमपि वयं सायं संफुल्लमल्लिमतल्लिका—
परिमलमुचा वाचा याचामहे न महेश्वरान् ॥ २४५ ॥

आत्माभिमानं सूचयन्नाह—जलधेः ( समुद्रस्य ) क्रोडे ( उरसि, मध्यभागे 'न ना क्रोडं भुजान्तरम्' अमरः ) क्रीडन् प्रचलन् यः कूपीटभवः ( अग्निः, बडवानलः ), "कूपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" तस्य बडवाग्नेः प्रतिस्पर्द्धिन्यः ( तत्समानाः ) पटवः प्रचण्डाश्च याः ज्वालामालाः ( शिखापङ्क्तयः ) ताभिः ( ज्वालामालाभिः ) आकुलः व्याप्तः ( प्रचण्डः ) जठरानलः उदराग्निः कामं ज्वलतु प्रचण्डो भवतु नाम । किन्तु वयं महेश्वरान् महतः ईश्वरान् धनिकान् "इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता" इत्यमरः । सायंकाले संफुल्ला विकसिता या मल्लिमतल्लिका श्रेष्ठा मल्लिका 'राजवल्ली' (रायबेल, 'बेला' ) मल्लिकामतल्लिकादिप्रशंसावाचकैः शब्दैः सह जातिवाचकमल्लिशब्दस्य 'प्रशंसावचनैश्च' इति समासः । तत्परिमलमुचा तत्सौगन्ध्यवाहिन्या अस्माकं वाचा वाणया वयं तृणमात्रमपि न याचामहे न प्रार्थयामहे । अस्माकम् उदरे कीदृशोऽपि क्षुधाऽग्निः ( सामुद्राग्निवत् प्रचण्डः ) ज्वलतु, किन्तु धनिकान् प्रति वयं तृणमात्रस्याऽपि याचनां न कुर्मः, का कथा धनादिकस्येति सर्वस्याशयः ॥२४५॥

निजनिजपतिप्रेमाऽपास्तप्रियान्तरसङ्गमा
विजहतु कथं धन्यास्तीव्रं सतीव्रतधारणम् ।
हिमकरपरीरम्भादम्भोजिनी न विजृम्भते
न च दिनमणिद्योतादुच्चैरुदेति कुमुद्वती ॥२४६॥

निजनिजपतीनां प्रेमवशात् अपास्तः दूरीकृतः प्रियान्तराणाम् अन्यप्रियाणां ( पुरुषाणाम् ) संगमः याभिः ताः । अत एव धन्याः ( प्रशस्याः ) सतीमहिलाः तीव्रं कठिनं सती( पतिव्रता )व्रतधारणं कथं विजहतु त्यजन्तु । अम्भोजिनी कमलिनी हिमकरस्य चन्द्रस्य परीरम्भात् ( स्पर्शात् ) न विजृम्भते न विकसति । सा तु सूर्यस्यैव संस्पर्शेन प्रफुल्लति । कुमुद्वती ( रात्रिविकासिनी कमलिनी ) दिनमणेः सूर्यस्य द्योतात् प्रकाशात् उच्चैः न उदेति, न विकसति । यथा कमलिन्याः सूर्यसंसर्गादेव प्रसन्नता, तथा पतिव्रतानां निजनिजपतीनां प्रेमैव जीवनावलम्बनमित्याशयः ॥२४६॥

नित्यज्यारूढचापा स्थिरतरवरधानुष्कता सद्ध्वजाऽऽढ्या
निःसानश्रीः समन्ताद्वशितजनमना व्योम्नि नग्नासिधारा ।

प्रोदञ्चच्छक्तिलीला मदगजगतियुक् जैत्रवाद्याऽनुनादा
जाग्रत्कामाधिराज्या जयति जयपुराख्या नवा राजधानी ॥२४७॥

प्रोदञ्चन्ती प्रकर्षेण उदीयमाना शक्तेः सामर्थ्यस्य, भगवत्याश्च लीला ( चेष्टा ) यस्याः एतादृशी जयपुराख्या नवा राजधानी जयति सर्वोत्कर्षेण वर्तते । ततश्च पद्ये उक्तानि विशेषणानि देव्यां राजधान्यां च युज्यन्ते । नित्यं ज्यायां ( प्रत्यञ्चायाम् ) आरूढः चापो ( धनुः ) यस्याः, युद्धार्थं सज्जकार्मुकेत्यर्थः, उभयत्र समानप्रायम् । सुस्थिरा वरा धानुष्कता धनुर्धारकता यस्याः दृढधनुर्धारिणीति यावत । समानमुभयत्र । उत्तमध्वजयुक्ता । निःसानानां सैन्यवाद्यानां ध्वजानां च श्रीः शोभा यस्याम् । समानम् । समन्तात् वशीकृतानि जनानां मनांसि, हृदये अधिष्ठानात् शोभाविशेषाच्च यया । आकाशे नग्ना कोषाद्बहिःकृता असि( खड्ग )धारा यया ( युद्धार्थं सज्जीकृतखड्गा ) । मदयुक्तानां गजानां गत्या गमनेन युक्ता नगरी, तद्वत् मत्तगामिनी भगवती । विजय-वाद्यानाम् अनुनादो यस्याम्, ( समानम् ) । जाग्रती 'कामा' नगर्याः अधिराजता यस्यां सा नगरी [ पुरा कामा–संस्थानाधीशो जयपुरे अधिराजोऽभवत् ], इदानीमिदं संस्थानं भरतपुरराज्यान्तर्भुक्तमस्ति । जाग्रती कामदेवस्य अधिराजता यस्यां सा भगवती ॥२४७॥

सीमा श्रीमाधवस्तावज्जातः ख्यातश्रियां धियाम् ।
भव्यनव्यभवद्भावस्तव्यभव्यवतां सताम् ॥२४८॥

श्रीमाधवः, भव्यव्यः, नित्यं नवीनो भवन् भावः ( भावोदयः ) येषाम् , अतएव स्तवनीय–भव्य ( कल्याण ) भाजनानां सज्जनानां ख्यातश्रियां सुप्रसिद्धशोभानां बुद्धीनां सीमा( पराकाष्ठा )भूतो जातः । सज्जनानां बुद्धीनां परकाष्ठामधितिष्ठति, परमबुद्धिमा-नित्याशयः ॥२४८॥

सारसारस्वकश्लोकतारहारसमक्षम ।
सानन्दनन्दनो दानोल्लासवासलसद्रस ॥२४९॥

सारात् अपि सारभूतो यः स्वकः स्वकीयः श्लोकः ( कीर्तिः, 'पद्ये यशसि च श्लोकः' इत्यमरः ) तेन ( श्लोकेन ) तारेण उन्नतेन हारेण सम समान, क्षम समर्थ ! उत्तमकीर्तिकारणात् प्रशस्तहारवत् कान्तिशालिन् समर्थ च ! दानानां नानाविधवितरणानां य उल्लासः उत्कर्षः, तस्य वासेन ( सत्तया ) लसन्ती रसा पृथिवी यस्य, दानातिशयेन पृथिवीं शोभयन् ! हे माधवेन्द्र ! त्वं सानन्दाः आनन्दसहिताः नन्दनाः पुत्राः यस्य, सुप्रसन्नपुत्रयुक्तो भवेत्याशीः ॥२४९॥

त्वमक्षामतमक्षेमधामग्रामविभक्तभ ।
जीवजीव चिरं स्वैरं नन्द नन्द नयप्रिय ॥२५०॥

अक्षामतमम् अतिशयेन अक्षामं ( अदुर्बलम्, पुष्टम् ) यत् क्षेमं मङ्गलं तस्य धाम स्थानभूत ! ग्रामेषु विभक्ता भा ( शोभा, कीर्त्तिः ) येन तादृश ! हे नय( नीति )-प्रिय ! त्वं चिरं जीव जीव, यथेच्छं च नन्द नन्द । द्विरुक्त्या आशीर्वादस्यातिशयो द्योत्यते ॥२५०॥

यामतामतसत्रासकारिणीरितसाध्वसा ।
सक्तभक्तवशश्रीशदयाऽनायासया तया ॥२५१॥ [ द्विपुष्पहारबन्धः ]

यामे प्रहरे प्रहरे यः तामः तान्तिः ( परिश्रान्तिः ) तेन तसतां उपक्षयं गच्छतां त्रासकारिणी दूरीकारिणी । अतिदुर्बलानां पृथक्कारिणीति यावत् । अतएव ईरितं दूरीकृतं साध्वसं भयं यया, 'भीतिर्भीः साध्वसं भयम्' इति कोषः । भक्तानां भयनिवारिणीति भावः । सक्तानाम् आसक्तानां भक्तानां वशीभूतो यः श्रीशः लक्ष्मीपतिः तस्य दया, तेऽस्तु इति भावः । अनायासया स्वाभाविक्या ( स्वतोजातया ) तया ( दयया ) अग्रे वर्णितं तव आशास्यमस्तु, इति शेषः ॥२५१॥

दत्तखड्गसुप्रहारगञ्जितारिवर्गमाद
दर्शनीयनव्यरूपतात्तमन्मथैकवाद ।
दर्शने विभासि वीर माधव ध्रुवप्रसाद
दर्पितातिदम्यताप्रकार भूरिसादनाद ॥२५२॥

दत्ताः ये खड्गस्य सुप्रहाराः [ चातुर्येण प्रहाराः ] तैः गञ्जितः दमितः अरिवर्गस्य मादः उन्मादः मदः येन तत्संबुद्धौ । खड्गद्वारा दूरीकृतशत्रुजनमद ! । तथा दर्शनीया या नव्यरूपता [ नवीनरूपशालिता ] तया आत्तः गृहीतः हृत इतियावत्, 'मन्मथः एकः अस्तीति' वादः येन, तत्संबुद्धौ । दर्शनीयेन अनुपमेन रूपेण त्वया, 'मन्मथः ( कामदेवः ) एकः अस्तीति जनप्रवादो दूरीकृतः, त्वमपि कामदेवसमानरूपशालीत्यर्थः । ध्रुवः सर्वदार्थं स्थायी प्रसादः अनुग्रहो यस्य, एकवारं यस्योपरि प्रसीदसि, सर्वदार्थं स हि राजाऽनुगृहीतो भवतीत्याशयः । ईदृश हे वीर माधव ! त्वं दर्शने विभासि शोभसे । दर्पः गर्वः संजातो येषां ते दर्पिताः, दर्पितानां गर्विष्ठानाम् अतिदम्यताप्रकारेण अतिद-

मनीयता [ एकान्तम् अधीनीकरणम् ] तादृशप्रकारेण अत्यन्तम् साद( अवसाद-विषण्णता कारी नादः ( सैन्यानां सिंहनादः ) यस्य तादृश ! [ हे वीर माधव ! त्वं विभासि ] इत्यन्वयः ॥२५२॥

**पाटीरवाटीमवगाह्य पम्पासम्पातशीतः फणिभिर्गृहीतः ।**
**आयाति वायुः सुदृशां क मानो धन्यायुवानो ह्यधुना धरण्याम् ॥२५३॥**

पाटीराणां चन्दनद्रुमाणां वाटीम् ( उपवनम् 'बाडी' इति लोकभाषा ) अवगाह्य [ आलोड्य ] तदनन्तरं पम्पासरोवरे संपातेन संगमेन शीतलः । ततः फणिभिः गृहीतः पीतः । चन्दनसम्बन्धेन सुगन्धिः, पम्पासंपातेन शीतलः, पन्नगैः पीततया मन्दीकृतः, एव शीतल-मन्द-सुगन्धिश्चायं वायुरित्याशयः । ईदृशः अयं मलयपवनः, आयाति, अधुना सुदृशां स्त्रीणां मानः क ? उद्दीपनसमयेऽस्मिन् मानस्य का कथा इत्याशयः । इदानीं पृथिव्याम् इमे युवकाः धन्याः ( भाग्यवन्तः,) यतः मानं दूरीकृत्य सुदृशः एतेषु अनुरज्यन्तीति भावः ॥२५३॥

**श्रीलहर्यरिक्तहर्म्यरन्तिभव्यवन्द्यतन्त्र**
**वेणुलासवेषलासि सुद्यु वेदलापसुज्ञ !**
**गौचरीणगौर्यरीणगौणरीत्यनाश्लथ त्व**
**या यथोक्तिर्धिष्ण्यजातपद्धतिः सपालयात्र ॥२५४॥**

**श्रीहरिहरं भवन्तं वेलावेलासुवेलासु ।**
**गौरी गौरी गौरीनाथः पाथोधिजापतिः पायात् ॥२५५॥**

श्रियाः ( लक्ष्म्याः ) लहरीभिः प्रवाहैः ( स्वच्छन्दविहरणैः ) अरिक्तं ( अशून्यम्, श्रीपूर्णमितियावत् ) यत् हर्म्यं ( प्रासादः ) तत्र या रन्तिः ( रमणं, 'वैदिकशब्दः सोयम् ) तया भव्यं प्रशस्यम्, अत एव सर्वैः वन्द्यं तन्त्रं ( प्रबन्धः ) यस्य तत्संबुद्धौ । लक्ष्मीविलासिन्नपि प्रबन्धचतुर ! वेणुवादनस्य लासस्य ( नृत्यस्य) च यो वेषः तेन लासी । स चासौ सुद्युवेदलापसुज्ञः च सुष्ठु सुखिनी द्यौः देवलोको "सुरलोको द्योदिवौ द्वे स्त्रियाम्" इत्यमरः ] येन, ईदृशो यो वेदः [ आम्नायः ] तस्य लापे सुविज्ञ ! । लास्यादिविलासेषु चतुरोऽपि यो वेदपाठे सुनिपुणः, इत्याशयः । उत्तरार्द्धमस्पष्टम् । कृष्णावतारे विलासनिपुणोऽपि त्वं वेदवाणीप्रचारक इति पद्ये वर्ण्यं पालय, इति पद्यस्याशयः प्रतीयते ।

अस्मात् '२५४' संख्यकात् पद्यात् एकैकस्य अक्षरस्य त्यागे [ यथा-श्रीलहर्य-रिक्तहर्म्य, अत्र आद्याक्षरस्य 'श्री' इत्यस्य ग्रहणे 'ल' इत्यस्य त्यागः, पुनः, 'र्य' इत्यस्य त्यागे कृते, 'रि' इत्यस्य ग्रहणम् । एवं रीत्या–'श्रीहरिहरं' इत्यादि २५५ तमं पद्यं निःसरति । पद्यस्य चार्थः—

गौरी गौरवर्णा या गौरी, भगवती पार्वती, तथा गौरीनाथः श्रीशंकरः । एवं पाथोधिजा श्रीलक्ष्मीः, तन्नाथः श्रीविष्णुश्च । वेलासु ( सर्वेषु कालेषु ), वेलासु सर्वासु मर्यादासु, वेलासु समुद्रस्य तटेषु च श्रीहरिहरं भवन्तं पायात् रक्षतात् [ 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः ] हरिहरश्चायं पूर्वं '१५६' तमे श्लोके, अन्यत्राऽपि कीर्तितः कश्चित् कवेर्जीवनकाले प्रसिद्धः पुरुषः । सत्युपलम्भे एतद्वृत्तान्तो भूमिकायां सूच्येत ॥२५५॥

अमृतमनृतेनाप्तुं वाञ्छन्त्यघेन सुखात्मतां
बहुलभषणैः पाण्डित्यं च च्छलैरतिसौहृदम् ।
कपटवचनैर्लोकज्ञत्वम्, ऋणैश्च सभाग्यता–
महह कलिना भ्रान्तो लोकोऽन्यथैव समीहते ॥२५६॥

अनृतेन मिथ्याभाषणेन अमृतं मोक्षं प्राप्तुं वाञ्छति । अघेन पापेन सुखात्मतां सुखपूर्णः आत्मा यस्य तत्ताम् । दुरितं दुःखजनकं किन्तु भ्रान्ताः पापेनाऽपि सुखात्मताम् इच्छन्ति । बहुलैः भषणैः [ श्वरवैः, कुक्कुरसदृशैः कर्णकटुभिर्दुर्वचनैः ] पाण्डित्यम् । कपटव्यवहारैः अत्यन्तं मित्रताम्, कपटवाक्यैः लोकवृत्तान्तवेदित्वम्, ऋणं कृत्वा लब्धैः धनैः भाग्यवत्ताम्, 'आप्तुं वाञ्छन्तीति' सर्वत्रान्वयः । अहह आश्चर्यम्, कलिकालेन भ्रमितमतिः अयं लोकः अन्यद्वारा अन्यप्रकारं वाञ्छति । दुःखसाधनेनाऽपि सुखं प्राप्तुं वाञ्छतीत्याशयः ॥२५६॥

ज्ञानदक्षताहितस्वभासमानरम्यकाय–
कामरामवामधामयुद्धरुद्धशत्रुपक्ष ।
दानदक्षताहितस्वभासमाननम्यमाय
धामधामनामनामशुद्धबुद्धवीतलक्ष ।
जानदक्षताहितस्वभासमानगम्यदाय
कामनामयामयामनव्यभव्यमानकक्ष ।

हानदक्षताहितस्वभासमानयम्यगाय
यामयामकामभाम हव्यकव्यभक्षरक्ष ॥२५७॥ अयं च कल्पतरुबन्धः

ज्ञाने या दक्षता प्रजापतिता तस्याम् आहितः संयोजितः स्वः [ आत्मा ] येन सः । स चासौ भासमानरम्यकायश्च । भासमानः दीप्यमानः रम्यः कायः शरीरं यस्य तत्संबुद्धौ । ज्ञानगौरवाद् बाह्यशरीरेऽपि दृश्यमानप्रभावः इत्यर्थः । कामं यथा स्यात्तथा अभिरामः सुन्दरः, तथा वामं शत्रूणां कृते भयावहं धाम ( तेजः ) यस्य, तथा युद्धे निजबलेन निरुद्धः शत्रूणां पक्षः समुदायः येन तत्संबुद्धौ । दानस्य या दक्षता चतुरता तद्वशात् हिताः हितकारिणः स्वाः आत्मीयाः यस्य तत्संबुद्धौ । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । दानदक्षताहितस्वः चासौ भासमाननम्यमायः, भासमाना प्रतीयमाना प्रणम्या माया प्रभावो यस्य तत्संबुद्धौ । धामनि धामनि गृहे गृहे, नामनि नामनि ( प्रत्येकनामग्रहणे ) शुद्धः निर्मायः प्रबुद्धः प्रबोधशाली, वीतः निरस्तः लक्षः ( 'अमुको मे प्रियः' इत्यादि अनुसंधानं ) यस्य, सर्वेषु समानदर्शीत्याशयः । जानन्ति ज्ञानशालीनि ( ज्ञाधातोः शतृ, 'जानत्' शब्दात् क्लीबे प्रथमाबहुवचनम् ) अक्षाणि इन्द्रियाणि यस्य तद्भावः जानदक्षता । तया हितः, सर्वेभ्यो हितकारी, अतएव स्वयं भासमानः, गम्यः सर्वैः प्राप्यः दायः ( दानम् ) यस्य तत्संबुद्धौ । कामपूरकं नाम यस्य तत्संबुद्धौ । यामे यामे ( प्रहरे प्रहरे, सर्वदा इत्यर्थः ) नव्यः सर्वदा भव्यश्च यः संमानः तस्य कक्ष( गृह )भूत ! 'हा' इति दयया परिशोचनम् । नदेन नादेन क्षतम् अहितानां स्वं धन येन तादृशश्चासौ भासमानयम्यगायश्च । भासमानः सर्वत्र दीप्यमानः ( प्रकटः ) यम्यः यमयितुं ग्रहीतुं शक्यः गायः ( कीर्तिगानम् ) यस्य तत्संबुद्धौ । यामे यामे कामः पर्याप्तः यः भामः ( कोपः ) तेन तद्वशात् हव्यकव्ययोः ( देव-पितृभोज्ययोः ) भक्षक ! ( हे प्रभावशालिन् ! ) अस्मान् 'रक्ष' त्रायस्व ॥२५७॥

यादृग्राजते रङ्गपट्टनगतं श्रीरङ्गराजप्रभो-
र्यादृग्विंकटनामवैभवयुतं प्रोद्भासि शेषाचले ।
पुण्यस्तम्भपुरे च यादृगुदितं श्रीविठ्ठलेशस्य तद्
दिव्यं तादृगिहास्ति माधवविभोर्लक्ष्मीपतेर्मन्दिरम् ॥२५८॥

यादृग् मन्दिरं रङ्गपट्टनगतं ( श्रीरङ्गम् ) श्रीरङ्गराजप्रभोः राजति । यादृक् च मन्दिरं शेषाचले वेंकटनाम्नः वैभवयुतं प्रोद्भासि (दीप्यमानं) शोभते । पुण्यस्य स्तम्भभूरे

( 'पूना' इतिख्याते ) यादृग् मन्दिरं श्रीविट्ठलनाथस्य उदितम् उदीयमानमस्ति । इह ( जयपुरे ) श्रीमाधवेन्द्रस्य तादृग् दिव्यम् उत्तमं श्रीलक्ष्मीपतेः ( विष्णोः ) मन्दिरम् अस्ति ॥२५८॥

तत्रानेन स्वभक्त्या कनकमणिमये रामगोपालनामा
स्वेष्टः संस्थापितो यस्त्रिभुवनविलसत्कोटिकल्याणदाता ।
सोयं दद्यात्सवाईजयपुरसदने सर्वदा राजमानो
भूपे श्रीमाधवाख्ये हरि-गुरुदयया सर्वमाङ्गल्यमालाम् ॥२५६॥

कनकेन मणिभिः ( रत्नैश्च ) खचिते तत्र (तस्मिन् मन्दिरे) अनेन (माधवेन्द्रेण) स्वस्य इष्टदेवः रामगोपालनामा स्वभक्त्या संस्थापितः, यः ( देवः ) त्रिभुवने विलसतां सुप्रसिद्धानां कोटिकल्याणानां ( शुभानां ) दाता अस्ति । सवाईजयपुरनामनि भवने सर्वदा राजमानः सः अयं ( रामगोपालनामा देवः ) श्रीहरेः, गुरोश्च दयया श्रीमाधवाख्ये भूपे सर्वमाङ्गल्यानां मालां समूहं दद्यात् इति ग्रन्थकर्तुराशीः ॥२५६॥

कामक्षामतमभ्रमज्जनमनस्तेन स्वनक्ष्मीलना
लक्ष्मीलक्ष्यलसामलामलमहामत्येकलोकस्वक ।
ओकस्येहि वहिर्नहि प्रहिणुनः स्वानध्वनध्वानभू–
नस्थानस्थन रानथावभवतो वश्यं वतश्रीपते

[ चतुष्पुष्पहारवन्धः ]

उत्तुङ्गोत्तुङ्गशुण्डाप्रसरससरसः सानदादानसामा
मोवंधाधावभीमाः सरुततरुसमा वारिदादारिवामाः ।
संरम्भाभारसंभावितममतविभामासभाभासमानाः
शोभन्ते तेभशोभाः समितितिमिसभा हेमभासा महेभाः ॥

[ गजवन्धः ]

श्रीशालिव्रजभूषण प्रविदितश्रीद्वारकेशप्रभोः
पादाम्भोजयुगप्रपत्तिपरम श्रीमाधवक्ष्माधव ।
शौर्यौदार्यविदार्यवार्यपरहृत् प्राज्ञार्यदारिद्र्यभी–
संभारद्रविणाम्बुवर्षजलदो जीयाः सहस्रं समाः ॥२६२॥

श्रीशाली यः व्रजभूषणः तन्नामको गोस्वामी, तद्द्वारा प्रविदितस्य ख्यापितस्य [ पूजितस्य इति तात्पर्यम् ) श्रीद्वारकाधीशस्य भगवतः पादाम्भोजयुगे या प्रपत्तिः ( शरणागतिः ) तया परम अत्यन्तं भाग्यशालिन्। हे माधवच्छमाधव ( भूपते ! ) शौर्येण ( वीरतया ) औदार्येण ( वदान्यतया ) च विदार्याः [ विदारणीयाः निवारणीयाश्च ] ये परे ( शत्रवः ) तेषां हृत् संहारकः सन् [ शत्रवः शूरतया विपाटनीयाः उदारतया च निवारणीयाः, यतो हि औदार्येण विमुग्धाः प्रजाः स्वयमेव त्वामाश्रित्य, शत्रून् दूरे कुर्वन्तु इति आकूतम्। प्राज्ञानाम् आर्याणां ( सभ्यानाम् ) च या दारिद्र्यभीः निर्धनताकृता भीतिः, तस्या निवृत्तये संभार( समारोह )पूर्वकम्। द्रविणरूपस्य अम्बुनः (जलस्य) वर्षको जलदः मेघः सन्। द्रविणमेव अम्बु तद्वर्षतीति द्रविणाम्बुवर्षः, कर्मण्यण्। सहस्त्र समाः सहस्त्रवत्सरपर्यन्तं जीयाः जयशाली भूयाः। समाः इति अत्यन्तसंयोगे द्वितीया। 'हायनोऽस्त्री शरत्समाः' इत्यमरः [ उदयपुरनरेशानां गुरुसंस्थानतया 'काँकरोली' नगरावस्थितं श्रीद्वारकाधीशमन्दिर चिरात्प्रथितम्। श्रीजगत्सिंहराणासमये तत्संस्थाने श्रीव्रजभूषणगोस्वामी महाभागः पीठाधीपतिरासीत्। उदयपुराधीशानां मातुलादीनां सहवासात् श्रीमाधवसिंहदेवोऽपि श्रीद्वारकाधीशसंस्थानाधिपतेः श्रीव्रजभूषणलालगोस्वामिमहोदयस्य सकाशाद् वैष्णवदीक्षां, 'कण्ठीं' च जग्राह इति ग्रन्थकर्तुरुत्तरैः सूचितं भवति ] ॥२६३॥

नानाज्ञानाविधानावरतरतरमानाथदानावधाना
वकाशशीलामल भासमान।
भानाभानासमानाभिमतमतसमानाथगानावसाना
सकाशलीलाचललासमान।
मानामानावमानावगतगततमानाथमानावहाना
प्रकाशकीलाकलनासमान।
कानाकानागमानावयतयतयमानाथमानापमाना
यकाशभीलाभलतासमान॥

[ कामधेनुबन्धः ]

मानें सजृम्भां वनितामजीहसत्प्रियोऽङ्गुलीशब्दपुरस्सरं ततः।
चित्रं स्वरान्तोऽपि विकस्वरो मुहुर्मानो हसान्तः स बभूव योषितः॥२६४॥

प्रियतमः मानाभ्यन्तरे सजृम्भां मुखविकासनयुक्तां दयिताम्। अङ्गुलीशब्द ('छोटिका') पुरस्सरम् अजीहसत् अहासयत्। हसतेः णयन्तात् लुङ्। मानिन्या नायि-

काया यदा जृम्भा समायाता, तदा धर्मशास्त्रादिनियमानुसारं प्रियः छोटिकाम् ('चुटकी') अदात् । प्रियस्य छोटिकादानसामयिकीं मुद्रां दृष्ट्वा प्रियतमाया अकस्मात् हास्यमुद्भवत् इत्याशयः । ततश्च स्वरान्तः सुस्वरः हृदयंगमकण्ठरवयुक्तः अपि प्रियायाः स मानः, हसः हसनम् अन्ते यस्य, अर्थात् हासान्तः बभूव । नायिकाया मानस्य अन्ते हासः प्रादुर्बभूवेति सर्वस्य सारः । शब्दचमत्कारस्तु—मानः स्वरान्तः अकाररूपः स्वरः (अच्) अन्ते यस्य, अर्थात् अजन्तोऽपि हसान्तः [ हलन्तो ] बभूव, इति चित्रम् । यः स्वरान्तः ( अजन्तः ), स हसान्तः हलन्तः कथं स्यादिति विरोधः । किन्तु स्वरः 'खिल् खिल्' इत्यादिहास्यसामयिकस्वरयुक्तः स मानः हसान्तः हास्यान्तः बभूवेति तत्परिहारः । सारस्वतादिव्याकरणे अजन्तः स्वरान्तः, हलन्तश्च हसान्तः प्रोच्यते ॥२६४॥

या माया सदयावहा ननु महाकालाबलाकालिका
करालवेशाकलिता विलासिनी ।
या माया सदयावहा दनुजहा बाला कलाशालिका
भरालकेशा चलितातिलासिनी ।
या माया सदयावहा तनुमहामालामलापालिका
विशालकेशावलिता विकासिनी ।
या माया सदयावहा तनुवहा भालामलालालिका
रसालदेशा फलिता विभासिनी ॥२६५॥

[ अयं च कल्पतरुकामधेनूभयबन्धः ]

या माया (भगवती) सन् उत्तमः यः अयः शुभविधिः तस्य आवहा प्रापिणी । महाकालस्य अबला रमणी । या माया सदयानां दयाशीलानां प्रापिका । दनुजानां हन्त्री कलाभिः शालिका शोभिनी । चलितः यः अतिलासः ( नृत्यम् ) तद्युक्ता । या माया सदया ( दयाशालिनी ) सर्वसुखानाम् आहवा प्रापयित्री । अतनुः स्थूला, पुष्टा, महती माला पुष्प-रत्नादीनां यस्याः । अथवा तनूनां शवशरीराणां महती मालिका यस्याः सा । अमला मोहमायादिदोषेभ्यो दूरीभूता । त्रिजगतां पालिका पालनकर्त्री । विशालैः पादान्तावलम्बिभिः केशैः वलिता व्याप्ता । विकासिनी सर्वतः प्रकटस्वरूपा । या माऽऽयासदयावहा मायाः लक्ष्म्याः आयासस्य, दयायाश्च आवहा प्रापयित्री, लक्ष्मीरपि मूर्त्यन्तर वैभवेन याभनुवर्तते इत्यर्थः । भक्तानां कृते तनुवहा शरीरधारिणी । भाले ललाटे अमला

दीप्यमाना । दीनभक्तानां लालिका पालिका ( लालनकर्त्री )। रसालदेशे आम्रवेष्टिते स्थले आ समन्तात् फलिता विकसिता व्याप्ता प्रसन्ना । विभासिनी समन्तात् फलिता विकसिता व्याप्ता प्रसन्ना । विभासिनी समन्तात् तेजोयुक्ता ॥२६५॥

**कालिन्दीतटनिकटस्फुटकुटजकुटीनिवाससौख्याय ।**
**व्यरचि मृषा भाषणमपि न तदजनि महत्कष्टम् ॥२६६॥**

कालिन्दी( यमुना )तटस्य निकटे स्फुटैः विकचैः कुटजपुष्पैः युता या कुटी निवासार्थं पर्णशाला तस्यां निवाससौख्याय । [ राज्ञां वैभवादिवर्णनार्थम् ] मिथ्याभाषणमपि व्यरचि अकारि । किन्तु तत् ( निवाससौख्यम् ) न अजनि जातम् । अत एव तदिदं महत् कष्टम् ॥२६६॥

**मिथ्याकथन–दुरत्ययनृपवरकृतरक्षणव्यथादुष्टः ।**
**हा वृन्दावन भवता संप्रति दूराद्विमुक्तोऽस्मि ॥२६७॥**

मिथ्याभाषणम्, दुरत्यययोः दुर्धर्षयोः पराक्रमशालिनोः द्वयोः नृपवरयोः [ईश्वरीसिंह–माधवसिंहयोः इति ग्रन्थकर्तुराकूतम् ] कृतस्य रक्षणस्य व्यथया दुष्टः दोषयुक्तः । परस्परविरुद्धाभ्यां द्वाभ्यां नरेशाभ्यां स्वरक्षणे यदयं कविः स्थापितः सेयमन्तःपरितापिनी गूढा पीड़ा, तया दूषितः [ अयं जनः ] दूरादेव परित्यक्तोऽस्मि । वृन्दावनवासो मे न संपन्न इत्याशयः ॥२६७॥

**राज्ञां सदस्सु गमनं कविताकरणं मृषाकलनम् ।**
**वृन्दावनवासार्थं व्यरचि, विधे किं न तदपि संपन्नम् ॥२६८॥**

सदस्सु सभासु । मृषाऽऽकलनं भाषणम्, 'कल' कामधेनुः । पूर्वोक्तं सर्वं वृन्दावनवासार्थं व्यरचि कृतम् । हे विधातः ! तदपि किं न संपन्नम् ? एतत्तु पूरणीयमासीदिति आकूतम् ॥२६८॥

**जयदेवि जयदेवि । जय जय जय शिप्रे रेवे त्वामहमिह सेवे ।**
**नादितनिर्मलनीरे विरलितपानीरे । दुरितनिवारणधीरे निधिकुशभृततीरे ॥ जय०**
**सगरिमगुणजितगङ्गे संततसतरङ्गे । ओंकारेशविहारे धरणीतलसारे ।**
**नृपमांधातुरगारे राजितशतधारे ।**

ससहस्राजुर्नलीले बहुमङ्गलशीले । उन्मूलितकलिकीले कुवलबहलनीले ॥ जय०
अमृतापूरे ( नित्यं ) सुमनोरथपूरे । सिद्धीनामिह पूरे रिपुशातनशूरे ॥
विन्ध्याचलकृतवासे नित्यनिराभासे । तत्तत्तटकृतरासे कलितकलित्रासे ॥ जय०
अखिलनदीकुलहासे नित्यानिराभासे । ब्रह्ममयाऽमृतलासे त्वाऽहमिहोपासे ॥ जय०
रेवे मेकलकन्ये हरदेहाऽनन्ये । धरणीमण्डलधन्ये त्वामहमिह मन्ये ॥ जय०
रेवाऽष्टकमिदमेकं पठ जन सविवेकम् ।
कृष्णसुकविसुखसेकं न वशीकुरुते कम् ? ॥ २६६ ॥ जय०

नर्मदाया नीराजनम्—नादितं कलकलनादेन युक्तं निर्मलं नीरं यस्याः तत्संबुद्धौ । विचलिताः जलवेगेन आभुग्नीकृताः वानीराः वेतसवृक्षाः यस्याम । पापानां निवारणे धीरे अविचले । निधिसदृशैः कुशैः (दर्भैः) भृतं तीरं यस्याः । गरिम्णा गौरवेण युक्ताः ये माधुर्य-पावित्र्यादयो गुणाः तद्द्वारा जिता गङ्गापि यया तत्संबु० । सततं सतरङ्गे ( तरङ्गैः सहिते ! ) ओंकारेशस्य तन्नाम्ना अभ्यर्चितस्य शंकरस्य विहारो यस्याम् । नृपस्य मांधातुः गृहे राजिताः शतं धाराः यस्याः, "प्रीता नर्मदा माधातुर्भवने शतधाराभिः प्रवाहितेति" पुराणकथा । सहस्रार्जुनस्य ( कार्तवीर्यस्य ) लीलाभिः विहारैः सहिते ! उन्मूलितः कलेः कालस्य कीलः ज्वाला, शङ्कुर्वा यया । 'शङ्कावपि द्वयोः कीलः' इत्यमरः । कुवलैः बदरी-विशेषैः अत्यन्तं नीले । नीलवर्णे 'कोलं कुवलफेनिले' इत्यमरः । अमृतं मोक्षं आपूरयति समर्पयति तच्छीले ! सुमनोरथानां पूरणकर्त्रि ! अणिमादिसिद्धीनां पूरे ! प्रवाहभूते ! घने निविडे वने विलासयुक्ते ! तटे कृतः रासः विलासः यया । अखिलं नदीकुलं समूहम् ) हसति शोभया अतिशेते । अथवा अखिलस्य नदीसमूहस्य हासः प्रमोदः यया तत्संबु० । ब्रह्ममयस्य अमृतस्य ( अद्वैतानन्दस्य ) लासः विलासः यस्याम् । अहं त्वाम् इह उपासे सेवे । 'त्वा' आदेशः । हरदेहात् अनन्ये अपृथग्भूते ! श्रीकृष्णकवेः सुखसे-कम् सुखवर्षकम् ( अष्टकम् ) कं न वशीकुरुते ? अपि तु सर्वम् ॥२६६॥

जय जय ओंकारेश
जय रेवाजलमण्डितमन्दिरमञ्जुलरूप ।
जय विबुधावलिपावन जय भुवनत्रयभूप ॥
जय चञ्चन्मृदुचन्द्रिक चन्द्रकलाञ्चितभाल ।
जय भुजगावलिभूषित जय पदनतभूपाल ॥
जय करुणावरुणालय तरुणाऽरुणसंकाश ।

अरुणानुजकेतुस्तुत शरणागतहृतपाश ॥
जय धृतजटिलजटागण जय भव हर जगदीश ।
पञ्चानन चतुरानन विविधानन वागीश ॥
जय वपुरर्द्धाहितनवनारी नाथनशील ।
जय विश्वोदयसंस्थितिसंहारामितलील ॥
जय जय यजुरन्वित ऋक्सामगवेदशिरस्यधिरूढ ।
आनन्देत्यात्मेति ब्रह्मेति श्रुतिरूढ ॥
गिरिजापतिरिति शिव इति शंकर इति गायन्ति ।
कः क्व च कुत इति पारं कथमपि बुधा न यन्ति ॥
ज्योतिर्लिङ्गमनादिं त्वामहमसकृन्नौमि ।
निर्गुण निरुपम निष्कलमन्यत्किमिह स्तौमि ॥
अष्टपदीयमुदारा कृष्णसुकविकलितेति ।
ॐ कारेश्वरकृपया कस्य न हृदि सुखमेति ॥२७०॥

रेवाजलेन मण्डितं शोभितं मन्दिरं यस्य, अत एव मञ्जुलरूप ! विबुध( देव-विद्वत ) पङ्क्तीनां पावन ( पवित्रीकारक ! ) । चञ्चन्ती ( शोभमाना ) मृदुः ( स्वल्पा ) कलावस्थात्वात् ) चन्द्रिका यस्याः, ईदृशी या चन्द्रकला तया अञ्चितं शोभितं भालं यस्य । पदयोः प्रणता भूपालाः ( राजानः ) यस्य । तरुणः यः अरुणः ( सूर्यः ) तत्सदृश ! स्फुरत्तेजोयुक्त ! अरुणानुजः ( गरुडः ) केतौ यस्य ईदृशेन विष्णुना स्तुत ! शरणमागतस्य हृताः सर्वविधाः पाशाः ( बन्धनानि ) येन । धृतः ( शिरसि स्थापितः ) जटिल. परस्परमुद्ग्रथितः जटागणः येन । पञ्चप्रभृतिभिः आननैः शोभित ! वाचाम् ईश स्वामिन् ! वपुषः शरीरस्य अर्द्धभागे आहिता स्थापिता नवा सुन्दरी नारी, तस्याः नाथनं वशीकरणं शीलं यस्य तत्सं० । विश्वस्य जगतः उदयः उत्पत्तिः, स्थितिः, संहारश्चेति अमिता ( अज्ञेया ) लीला यस्य । यजुषा यजुर्वेदन अन्विताभ्यां ऋक्-साम-वेदानां शिरसि उत्तमभागे ( वेदान्ते वा ) अधिरूढ वर्णितेत्यर्थः । इत्यादिषु श्रुतिषु रूढ, वर्णित ! कः कीदृक्स्वरूपः, कुत्र कस्मिन्नाधारे, किंकारणादिति तत्त्वबोधे बुधाः पण्डिता अपि पारं न यन्ति गच्छन्ति । ज्योतिषः तेजसः लिङ्गस्वरूपम् अनादिं सर्वतः आदिभूतं त्वाम् असकृद् पुनः पुनः नौमि स्तौमि । कस्य हृदये सुखं यथा स्यात्तथा न एति तिष्ठति ॥२७०॥

ग्रीष्मवर्णनम्

धृताङ्गारग्रामानिव कठिनधामा करगणान्
दिशासु द्रागेव द्रढिमदुरुपास्यान् किरति यत् ।
समीरस्तानेतान् द्विगुणयति दावाग्निकवली–
कृतोद्गीर्णक्षोणीरुहगणपरीरम्भनिपुणः ॥२७१॥

धृतः अङ्गारग्रामः ( समूहः ) यैः ईदृशान् इव किरणसमूहान् कठिनधामा (तीक्ष्ण धाम तेजः यस्य, ईदृशः चण्डरश्मिः सूर्यः) यत् किरति प्रक्षिपति । द्रढिम्ना (तीक्ष्णतया) दुरुपास्यान् असह्यान् ( किरणगणान् ) तान् किरणसमूहान् । दावाग्निना पूर्वं कवलीकृताः भक्षिताः, ततः उद्गीर्णाः उद्वान्ताः ये क्षोणीरुहगणाः वृक्षसमूहाः तेषां परीरम्भे आलिङ्गने निपुणः समीरः वायुः ( तान् किरणसमूहान् ) द्विगुणीकरोति । सूर्येण ये किरणाः क्षिप्ताः तान् वायुर्द्विगुणिततैक्ष्ण्यान् वर्षति । सूर्यापेक्षयापि वायोः संतापः सुतरामसह्यो भवतीत्याशयः । तत्र ग्रीष्मे च वृक्षा अपि एकवारं दावाग्निना भक्षिताः, तत उद्वान्ता इव भवन्तीत्यर्थः ॥ २७१ ॥

अगस्त्येश यस्ते यशस्तेजसीव प्रशस्ते समस्तेश वस्ते पदाब्जे ।
समस्तेन कस्तेन उच्चैस्तपस्यामधस्तेन तस्मान्नमस्ते नमस्ते ॥२७२॥

स्फुरज्जघननालकेङ्गुलिदलावलीमण्डिते
प्रसन्ननखकेसरे कनकभूषणोत्कर्णिके ।
मनोमधुपमन्दिरे मधुरतामधूलीभरे
जनार्दनपदाम्बुजे हृदयतापहृत्यै भजे ॥२७३॥

स्फुरद् दीप्यमानं जघनं जङ्घाऽधोभाग एव नालो ययोः ते । अङ्गुलय एव दलावली पत्रसमूहस्तेन मण्डिते । प्रसन्नाः स्वच्छा नखा एव केसराः किंजल्का ययोः ते । कनकभूषणान्येव उत् उन्नता कर्णिका ययोः ते । मनोरूपस्य मधुपस्य मन्दिरभूते । मधुरता माधुर्यमेव मधूलीभरः मधु-रसभरः ययोः ते । ईदृशे जनार्दनभगवतः पादाम्बुजे चरणरूप कमले हृदयतापस्य हृत्यै हरणाय भजे सेवे ॥ २७३ ॥

मनोमधुरिमाम्बुधिं तरुणिमैकमोदालयं
मनोजमदमन्थरीकरणकार्मणश्रीभरम् ।
मनोरथलताफलस्फुरदनुक्षणप्रेक्षणं
व्रजाङ्गणविचक्षणं हृदि जनार्दनं भावये ॥२७४॥

मनसः ( कृते ) मधुरिम्णः माधुर्यस्य समुद्रम् । तरुणिम्नः तारुण्यस्य ( यौवनस्य ) एकं प्रधानं मोदस्य आनन्दस्य भवनभूतम् । जनार्दने एव तरुणिमा गृहे इव आनन्दपूर्वकं निवसतीत्यर्थः । कामदेवमदस्य मन्थरी( मन्दी )करणाय कार्मण( वशीकरण, 'जादू' )भूतः श्रीभरः शोभासमूहो यस्य तम् । मनोरथरूपाया लतायाः फलस्य स्फुरत् प्रकटीभवत् अनुक्षणं प्रतिक्षणं वीक्षणं( दर्शनं )यस्मिन् । मनोरथलतायाः फलं यस्मिन् क्षणे क्षणे एव वीक्षितं भवतीत्याशयः । व्रजभूमौ विचक्षणां धीमन्तम् ( अद्भुतम् ) जनार्दनं भगवन्तं विष्णुं हृदि ध्यायामि ॥ २७४ ॥

## ❀ हेमन्तः ❀

चञ्चच्चन्द्रकचन्द्रचन्दनचमत्कारप्रचारापहं
पद्मोल्लासपराङ्मुखप्रकृतिभिर्दोषावलीभिः श्रितम् ।
नीहारप्रहतप्रभाकरविभासंदोहमन्दोद्यमं
हेमन्तं गुणवन्तमद्य भवती कर्तुं समर्था प्रिये ॥२७५॥

चञ्चन्तः स्फुरन्तः ( शोभमानाः ) ये चन्द्रक( कर्पूर ),चन्द्र-चन्दनाः तेषां चमत्कारस्य प्रभावस्य प्रचारविघातकम् । हेमन्ते शीतलगुणानामेषां चमत्कारो जनैर्नाऽनुभूयते इत्यर्थः । पद्मानां कमलानाम् उल्लासाद् विकासात् पराङ्मुखी प्रकृतिः ( स्वभावः ) यासाम् ईदृशीभिः दोषावलीभिः दोषसमूहैः [किं वा दोषालीभिः रात्रिसमूहैः] श्रितं युक्तम् । हेमन्ते कमलानामुल्लासो न भवतीति सुप्रसिद्धम् । 'दोषा च नक्तं च रजनाविति' इति कोषः । नीहारेण हिमेन प्रहतः अभिभूतः यः प्रभाकरः सूर्यः तस्य विभा( कान्ति )संदोहस्य ( समूहस्य ) मन्दः उद्यमः प्रचारः प्रभावः यस्मिन् ईदृशं हेमन्तर्तुं हे प्रिये ! भवती गुणवन्तं संपादयितुं समर्थास्तीति प्रियतमस्योक्तिः । यः ऋतुः प्राकृतशोभाविघातकतया शृङ्गारप्रतीपः, अत एव दोषवान्, तादृशमपि तं गुणवन्तं संपादयितुं भवती एव प्रभवतीति प्रियां स्वाभिलाषाभिमुखीं संपादयतः प्रियतमस्याकूतम् 'अद्य' इति पदेन ध्वन्यते ॥२७५॥

असोढविधुमण्डलप्रसरदातपत्रद्युति-
र्दिनेशकरचामरप्रकरनित्यसंवीजितः ।
तुषारयशसोज्ज्वलः स्मरशरप्रतापोन्नतो
हिमर्तुपृथिवीपतिः पुरि पुरि प्रसर्पत्यसौ ॥२७६॥

न सोढा न मर्षिता विधुमण्डलरूपस्य प्रसरतः आतपत्रस्य छत्रस्य द्युतिः येन । ( अन्यस्य राज्ञः छत्रद्युतिर्न सोढा ) । दिनेशकरा एव चामरप्रकरः ( चमरसमूहः ), तेन

नित्यं संवीजितः । तुषार( हिम )रूपेण यशसा उज्ज्वलः । कामस्य शराणां प्रतापेन उन्नतः ( कामप्राबल्ययुक्तः ) हेमन्तरूपः अयं भूपतिः नगर्यां नगर्यां प्राबल्येन प्रसरति ॥२७६॥

उत्तालोत्तरवातवीतिनिवहप्रोद्यत्खुराग्रोद्धतः
प्रालेयोत्कटधूलिधोरणिघनव्यालुप्तदिङ्मण्डलः ।
कूर्पासप्रकरप्रभूतकवचच्छन्नैर्जनैर्वेष्टितः
सेनानीर्मदनस्य शीतसमयो जागर्ति जित्वा जगत् ॥२७७॥

उत्तालाः उद्धताः ये उत्तरदिशो वाताः ( पवनाः ) ते एव वीतिनिवहः अश्वसमूहः तस्य प्रोद्यद्भिः उच्छलद्भिः खुराग्रैः उद्धतः प्रचण्डः । 'घोटके वीतितुरगतुरङ्गाश्व—तुरङ्गमाः' इत्यमरः । प्रालेय( हिम )रूपा या उत्कटा धूलिधोरणी ( शकटिः ), सैव घनः मेघः, तेन व्यालुप्तम् अदृश्यं दिङ्मण्डलं यस्मिन् । हिमप्रपातयुक्तः इत्याशयः । कूर्पासकानां चोलानां ( 'रजाई' ) प्रकरः समूह एव प्रभूतानि कवचानि, तदाच्छन्नैः ( तद्वेष्टितैः ) जनैर्व्याप्तः । शीतसमयः मदनस्य सेनापतिः जगद्विजयं कृत्वा विजृम्भते ॥२७७॥

कर्पूरोज्ज्वलदीपवर्तिकलिते लक्ष्मीविलासाश्रिते
पक्षापूरिततूलिकाढ्यशयनन्यस्तोपधानद्वये ।
तारुण्यासवघूर्णमाननयनस्त्रीसुन्दरे मन्दिरे
हेमन्तागमसंततोत्सवकरीः सन्तो नयन्ते निशाः ॥२७८॥

कर्पूरेण उज्ज्वलाः या दीपवर्तयः ताभिः प्रभासिते । पक्षैः गरुद्भिः ( कोमलैः ) आपूरिता या तूलिका आस्तरणी 'गद्दा' तया आढ्ये ( युक्ते ) शयने शयनीये, विन्यस्तं स्थापितम् उपधान( गेंदुक )द्वयं यस्मिन् , तारुण्यरूपेण आसवेन ( मद्येन ) घूर्णमाननयनया स्त्रिया सुन्दरे ( सौख्य—शोभाशालिनि ) मन्दिरे सन्तः ( भाग्यवन्तः ) हेमन्त—ऋतोः आगमनेन संततम् आनन्दकारिणीः निशाः गमयन्ति ॥२७८॥

सद्गुणौघकलितं श्रितरागं शीतभीतिहरणं सुखसङ्गम् ।
तन्वि दीव्यदतनु स्पृहयामस्तूलकञ्चुकमिदं च तवाङ्गम् ॥२७९॥

सन् उत्तमः यः गुणौघः सूत्रसमूहः तेन युक्तम् , श्रितः रागः ( रगः अरुणादिवर्णः ) येन तत् , सुखकारकः सङ्गो यस्य तत् । दीव्यद् अतनु ( द्युतियुक्तं चापि अतनु पुष्टम् )

इदं तूनभृतं कञ्चुकं गात्रवस्त्रम् । हे तन्वि ! इदं तव अङ्गमपि—सन् प्रशस्यः सौन्दर्य-सौकुमार्यादिगुणसमूहः, तेन युक्तम् । श्रितः रागः अनुरागः स्नेहः येन तत् । दीव्यन् सर्वतः प्रसरन् अतनुः अनङ्गः यस्मिन्, एवंविधं तव अङ्गं च स्पृहयामः । शीतभीत्यादि-विशेषणानि स्पष्टार्थानि ॥२७९॥

हे हेमाङ्गि महेभकुम्भविलसद्वक्षोजभाराञ्चिते
यस्मै दास्यसि मुद्रिकाञ्चितरुचा हस्तेन ताम्बूलिकाम् ।
खेदस्वेदविभेदमेदुरचलत्काश्मीरपङ्केऽङ्गके
तस्य ग्रीष्मसमां करिष्यसि पुनः पौषत्रियामामिमाम् ॥२८०॥

हेम( सुवर्ण )वत् अङ्गं यस्याः तत्सम्बुद्धौ । महन्तौ यौ इभकुम्भौ ( गज शिरोभागौ ) तद्वत् विलसतोः शोभमानयोः वक्षोजयोः ( स्तनयोः ) भारेण अञ्चिते शोभिते ! यस्मै ( भाग्यवते पुरुषाय ), मुद्रिकया अङ्गुलीयकेन अञ्चिता शोभिता रुक् कान्तिर्यस्य [ अङ्गुलीयकशोभितेन ] हस्तेन ताम्बूलिकाम् ( वीटिकाम् ) दास्यसि । खेदस्य ( विषादस्य ), स्वेदस्य प्रस्वेदस्य च विभेदे दूरीकरणे मेदुरः ( सान्द्रश्च स्निग्धश्च ), चलन् प्रसरन् काश्मीरपङ्कः ( केसरद्रवः ) यस्मिन् ईदृशे तव अङ्गके ( मृदुनि शरीरे ) पौषस्य त्रियामां रात्रिमपि ग्रीष्मर्तुसमानां करिष्यसि । स्वाङ्गप्रभावेण पौषरात्र्यामपि ग्रीष्मरात्रिवत् तवाङ्गसङ्गेन खेद—स्वेदादयो भविष्यन्तीति हेमाङ्ग्याः अतिशयो द्योत्यते ॥२८०॥

महादोषाक्रान्तः प्रतिपदमहोरूपरहितः
सदा जाग्रज्जाड्यो ननु च तुहिनाच्छादितरसः ।
गलद्गत्युत्कर्षो वहलतरचैलावृतिहितः
कथं सोढुं शक्यः कुकविरिव हेमन्तसमयः ॥२८१॥

महद्भिः दोषैः च्युतसंस्कृत्यादिभिः आक्रान्तः( कुकविः ),महतीभिः दोषाभिः रात्रिभिः आक्रान्तः व्याप्तः (हेमन्तः), प्रतिपदम् अहो ( खेदे, आश्चर्ये वा ) रूपैः शब्दधा-त्वादीनां यथावद्रूपैः रहितः ( अथवा रूपेण शब्दसौन्दर्येण ) रहितः [ कुकविः ], हेमन्त-समयस्तु अहोरूपेण दिनस्य रूपेण रहितः । अर्थात् दिनस्य आगमनं न प्रतीयते । यथाऽऽह विहारी—"आवत जात न पेखियत तेजहिं तजि सियरान । घरहँ जमाईलौं घट्यो खरो पूसदिनमान ॥"। सदा जाग्रती स्फुरन्ती जडता ( स्थूलता, मूर्खता ) यस्य (कुकविः),

सदा जाग्रत् वर्तमानं जाड्यं शीतातिशयकृतम् अचलत्वं यस्मिन् ( हेमन्तः ) । ननु-च-तु-हि-न-इत्यादिभिः च्छन्दःपूरणप्रयोजनैः पदैः आच्छादितः ( अन्तरितः, निगूढीकृतः ) रसः शृंगारादिर्येन ( कुकविः ), ननु च निश्चयेनैव तुहिनैः हिमैः आच्छादिता रसा (पृथ्वी) येन ईदृक्षः ( हेमन्तः ), गलन् शिथिलीभवन् गतेः रचनायाः उत्कर्षः अतिशयः यस्य, यस्य रचनायाम् उत्तरोत्तरं प्रवाहशैथिल्यं प्रतीयते ( कुकविः ), गलन् न्यूनीभवन् गतेः गमनस्य उत्कर्षः ( शैघ्र्यम् ) यस्मिन् ईदृशः (हेमन्तः) । बहल( बहु )तराणां चैलानाम् अधमप्रयोगाणाम् आवृत्यां आवरणे हितः लग्नः, पूर्वमेवंविधान प्रयोगान् करोति येषां-दोषाऽऽवरणार्थं भूरितरो यत्नः कर्तव्यो भवति ईदृशः ( कुकविः ) । बहुतराणां चैलानां वस्त्राणाम् आवृत्त्या आवरणेन हितः सुखकारकः ( हेमन्तः ) । 'चैलं वस्त्रेऽधमे त्रिषु' इत्यमरः । कुकविः हेमन्तश्च अतिकष्टेन ( संयमेन ) सोढुं शक्यः ॥२८१॥

हसन्तीभिर्युक्तः सततखरतामूर्तिभिरथो
द्विजेशासह्यत्वात्सुविहितहितस्तिग्मरुचिना ।
चिरादत्तोद्वेगः श्रुतिशतपिधानैककुशलः
कलिः किं हेमन्तः कलितबहुदोषैकमहितः ॥२८२॥

सज्जनान् उपहसन्तीभिः, सततं खरतायाः दुष्टतायाः मूर्तिभिः[ दुष्टतायाः प्रत्यक्ष-मूर्तिभिरिव खलयवनादिभिः] युक्तः (कलिः) । निरन्तरं तीक्ष्णतायाः तापस्य मूर्तिभिः हस-न्तीभिः (अङ्गारधानिकाभिः 'अँगीठी', 'अङ्गारधानिकाऽङ्गारशटकस्त्यपि हसन्त्यपि' इत्यमरः) ( हेमन्तः ) । अनाचारबाहुल्यात् द्विजेशानां ब्राह्मणश्रेष्ठानाम् असह्यतया क्रूररुचिना ( स्वातन्त्र्यप्रियेण जनेन ) सुविहितानि हितानि यत्र । ब्राह्मणा अनाचारमनभिरोचयन्तो नात्राभिमुखा भवन्ति, ततश्च क्रूरेच्छेन जनेन यथेच्छं हितसाधनं क्रियते इत्यर्थः । द्विजेशस्य चन्द्रस्य शीतजनकतया असह्यत्वात् तिग्मरुचिना तीक्ष्णकान्तिना ( सूर्येण ) सुविहितानि हितानि सौख्यानि यस्मिन् ईदृशः ( हेमन्तः ) । दत्तः उद्वेगः हृदयदुःखं येन ईदृशः ( कलिः ) । शीताधिक्याद् दत्तपीडः (हेमन्तः) । श्रुतिशतस्य वेदमन्त्रशतस्य पिधाने अभि-भवे (त्यागे) एकः कुशलः (कलिः) । श्रुत्योः द्वयोः कर्णयोः पिधाने वस्त्रावरणादिभिर्वेष्टने अतिकुशलः ( हेमन्तः ) । कलितैः राशीभूतैः बहुभिर्दोषैः ( संस्कारत्याग-अनाचारादिभिः ) बहुभिः दुरितैः एकः गरीयान् (कलिः) । कलिताभिः बह्वीभिः दीर्घाभिः दोषाभिः (रात्रिभिः) एकः महितः गरीयान् (हेमन्तः) ॥२८२॥

अन्तः संदेशरुच्या सकलरससमास्वादकामप्रमोदी
श्लाघायुक्तार्यमान्यव्यतिकरसुखकृन्मुक्ततापक्षपाती ।
जातश्रीकृष्णवर्मासमहिमरचनाच्छादिताशेषविश्वो
नायं हेमन्तकालः प्रसरति सुकवेः कस्यचित्काव्यबन्धः ॥२८३॥

गुप्तसंदेश–(नायकयोः परस्परं समागमसंकेत)रुचिपूर्वकं संपूर्णस्य ( न तु साऽवशेषस्य ) रसस्य समास्वादेन कामजनितः प्रमोदो यस्मिन्, यस्मिन् ऋतौ मिथः संदेशपूर्वकं पूर्णो रसानुभवो भवतीति कामानन्दपूर्णः सोयमित्याशयः। श्लाघायुक्तः प्रशंसनीयः अर्यमा सूर्यो यस्मिन्, सूर्यातपो यत्र ऋतौ प्रियो भवति । अन्यव्यतिकरेषु यात्रा-श्रम-वस्त्रधारणादिव्यापारेष्वपि सुखकारकः । मुक्तः उन्मुक्तः अवारितः तापः वह्निसेवनं यासु एवंविधाभिः क्षपाभिः रात्रिभिः अतति व्याप्नोति, रात्रिषु वह्निसेवनादिनैव यत्र सुखं भवतीति तात्पर्यम् । जातश्रीकृष्णवर्मा, जाता श्रीः सुखसंपद् यस्मात् ईदृशः कृष्णवर्मा अग्निः यस्मिन्, यस्मिन् ऋतौ कृष्णवर्मनः अग्नेः सकाशादेव श्रीःसौख्यलक्ष्मीरस्तीति भावः। "बर्हिः शुष्मा कृष्णवर्मा शोचिष्केश उषर्बुधः इत्यमरः। असमा अर्थाद् विषमा या हिमरचना प्रालेयपातः तेन आच्छादितं अशेषविश्वं यस्मिन् ईदृशः हेमन्तकालः नास्ति, अपितु कस्यचित्सुकवेः काव्यरचनास्ति। काव्यबन्धः अपि अन्तः गुप्तरूपेण (व्यङ्ग्यरूपेण) रामादिवद् वर्तितव्यं न तु रावणादिवद् इति उपदेशरूपेण सकलानां रसानां शृङ्गार-वीरादीनां समास्वादनेन कामं यथेच्छं प्रमोद(अनिर्वचनीयानन्द)कारी । श्लाघायुक्ताः सर्वप्रशस्या अतएव आर्यैः श्रेष्ठैः मान्या ये व्यतिकराः कथानकरूपेण वर्णिता घटनाः ताभिः सुखकारकः । दुःखादिभ्यो या मुक्तता तस्याः पक्षपाती । आनन्दजननेन दुःखदूरीकारकः, अथवा शान्तरसाद्युपदेशेन मुक्तेः पक्षपाती । जातं श्रीकृष्णस्य वर्त्म मार्गः यस्मिन्, श्रीकृष्णेति उपलक्षणम् । श्रीकृष्ण-श्रीरामादिभि आदर्शपुरुषैः यत् चरित्रं प्रवर्तितम् तद्द्वारैव यस्मिन् काव्यबन्धे मार्गदर्शनं क्रियते, तादृशः सुकवेः काव्यबन्ध इति तात्पर्यम् । अतएव समहिम-रचनाभिः माहात्म्यशालिनीभिः वशीकृतसमस्तविश्वः काव्यबन्ध इति तात्पर्यम् ॥२८३॥

दीव्यद्धृयोहसन्तीभृतदहनमहावाडवस्तूलवस्त्रो
द्वीपस्थैर्दूरवर्ज्यः प्रविततरजनीचारिणां स्थानभूतः ।
प्रोद्यत्प्रालेयपूरैः परिहृततरणिप्रक्रमः पूर्णपद्मो
नासौ हेमन्तकालः प्रसरति परितः प्लावनार्थं पयोधिः ॥२८४॥

दीव्यन्तीषु (प्रज्वलन्तीषु) हसन्तीषु भृतः पूर्णः यः दहनः (अग्निः) स एव महान् वाडवः वडवानलो यस्मिन् । तूलस्य ( 'रूई' इतिख्यातस्य ) वस्त्राणि यस्मिन् ( हेमन्त

कालः ), पयोधिस्तु 'मस्तूल' इति ख्यातस्य नौकाध्वजस्य वस्त्रं यस्मिन् । द्विर्गताः आपः ( जलानि ) यस्मिन्, परितो जलप्रदेशवासिभिर्जनैः दूरतः परिहृतः ( हेमन्तः )। पयोधिरपि द्वीपवासिभिर्जलप्लवनभयाद् दूरतो वर्ज्यः। प्रवितता ( दीर्घा ) या रजनी ( रात्रिः ) तच्चारिणां रात्रिचराणां श्वापद–पक्षि–प्रभृतीनां स्थानभूतः हेमन्तः। [ शीतरात्रौ इमे जन्तवो बाहुल्येन भ्रमन्ति ]। समुद्रस्तु रजनीचराणां राक्षसानामालयभूतः । प्रोद्यद्भिः उद्गच्छद्भिः ( प्रबलैः ) प्रालेयपूरैः ( हिमपातैः ) परिहृतः दूरीकृतः तरणेः सूर्यस्य प्रक्रमः संचारो यस्मिन् ( हेमन्तः )। पयोधिस्तु–प्रोद्गच्छद्भिः हिमपातैः दूरीकृतः तरणेः नौकायाः संचारो यस्मिन्नीदृशः। पूर्णानि समाप्तिं गतानि पद्मानि कमलानि यस्मिन् ईदृशः हेमन्तकालः। पयोधिस्तु–पूर्णा पद्मा ( लक्ष्मीः ) यस्मिन् ( लक्ष्मीजनकत्वात् )। ततश्च तादृशधर्मशालित्वात् अयं हेमन्तो नास्ति, अपितु सर्वेषां द्रावणार्थम् अयं पयोधिरस्तीत्यर्थः ॥२८४

उष्णकालविभवप्रतिकूलं वह्निसेवनविधावनुकूलम् ।
सर्वभोगविलसद्रसमूलं सूपकारमिव पश्य सहस्यम् ॥२८५

उष्णकालस्य ( ग्रीष्मस्य ) ये विभवाः जलक्रीडादयः तस्य विरुद्धम् ( सहस्यम्–पौषम् )। सूपकारः पाचकः अपि उष्णकालवैभवात्प्रतिकूलः, उष्णकालं न अभिरोचयति सततमग्निसेवनात्। वह्निसेचनं वह्निप्रवर्द्धनं तस्य अनुकूलम् (उभयमपि)। सर्वेषां भोगानां विलसन्तो ये मधुरादयो रसाः तेषां मूलं जनकं ( सूपकारम् )। सर्वविधेषु भोगेषु सुखोपभोगेषु विलसन्तो ये रसाः शृङ्गारादयः तेषां मूलम्। रसोपभोगायाऽनुकूलम्। "पौषे तैपसहस्यौ द्वौ" इत्यमरः ॥२८५॥

अस्मिन्नम्भोदमध्योल्लसदखिलनिशानाथबिम्बाऽनुकारे
मा कोक व्याकुलीभूः कलितनिजवधूसङ्गकेलीविमोकः ।
धत्ते यत्तेजसाऽसौ विकसदसनभावह्निवेगेन कर्षन्
धूलीधारान्धकारान् जयधरणिपतेर्यन्त्रतोलोऽर्हगोलः ॥२८६॥

आम्भोद(मेघ) मध्ये उल्लसन् दीप्यमानः यः अखिलः पूर्णः निशानाथस्य चन्द्रस्य बिम्बः ( मंडलम् ) तदनुकारे तत्सदृशे [ मेघमण्डलमध्यगतपूर्णचन्द्रसदृशे ] अस्मिन् ( गोलके ). कलितः कृतः निजवध्वाः सङ्गकेल्याः ( संगमक्रीडायाः ) विमोकः त्यागः येन ईदृशः त्वं हे कोक हे चक्रवाक ! मा व्याकुलो भूः। निजप्रियतमायाः संगमक्रीडां

विमुच्य व्याकुलो मा भूः। यतः ( अयं चन्द्रः नास्ति, अपितु ) विकसन् सर्वतः प्रसरन् असनभायाः प्रक्षेपणप्रभायाः वह्निवेगो यस्य, ईदृशेन तेजसा धूलिधारारूपान् अन्धकारान् आकर्षन् जयधरणिपतेः, ( जयभूमिपतेः, जयसिंहस्य ) यन्त्रतोलः [ 'तोभ' रूपाद् यन्त्राद् तोलनम् उत्क्षेपणं यस्य ईदृशः ] अर्हगोलः (श्रेष्ठगोलकः) असौ पूर्वोक्तान् अन्धकारान् धत्ते। हे चक्रवाक! प्रियया सह संगमकेलेर्वियोगकारणीभूतः मेघमध्यगतः अयं चन्द्रो नास्ति, अपितु प्रक्षेपणजन्यवह्निना अरुणीभूतः अयं जयसिंहस्य गोलकः अस्ति। इमेऽपि मेघा न सन्ति, अपितु धूलीधारारूपा अन्धकाराः सन्ति, इति सर्वस्याशयः ॥२८६॥

कः स्याच्छब्दो निषेधे खलमनसि मतो को गुणस्योपसर्गौ
कौ स्यातां यौ प्रकर्षाऽतिशयनिगदनौ कुत्र शस्तोर्ध्वरेखा।
रुत्वं क्वाम्रेडिते, हौ प्रभवति पुरतस्तस्यतेः किं नु रूपं
कोक्तिः श्रीशाय पाद्यं विरचयति नले, पाणिनेः किं नु सूत्रम् ॥२८७॥

निषेधे निषेधार्थे कः शब्दः ? 'न'। खलमनसि गुणस्य कः ? 'लोपः'। यतो हि दुष्टपुरुषस्य मानसे गुणस्य प्रवेश एव न भवति। ईदृशौ उपसर्गौ कौ स्यातां ( भवेताम् ) यौ ( उपसर्गौ ) प्रकर्षस्य अतिशयस्य च निगदनौ वाचकौ स्याताम् ? 'प्र-अति'। ऊर्ध्वरेखा कुत्र शस्ता ( प्रशस्ता ) ? 'पदि' अर्थात् पादे। क आम्रेडिते रुत्वं भवति ? 'कान्'। [ तथा हि सूत्रं 'कानाम्रेडिते' ] ! 'हौ' पुरतः अग्रे प्रभवति सति, तस्यतेः ( 'तसु उपक्षये' ) इत्यस्य-किं रूपम् ? 'तस्य' ['तस्य तस्यतात् तस्यतं तस्यत' इत्यादीनि] श्रीशाय लक्ष्मीकान्ताय पाद्यं पादार्थमुदकं विरचयति प्रददाने नले का उक्तिः ? 'नलः अपः प्राति पदि कान्तस्य' अर्थात् राजा नलः कान्तस्य श्रीकान्तस्य पदि पादे अपः जलानि प्राति पूरयति। 'प्रा-पूरणे' अदादिः। पाणिनेः किं सूत्रम् ? 'नलोपः प्रातिपदिकान्तस्य'। ततश्च सेयं बहिर्लापिका 'समस्तद्विर्व्यस्तप्रसिद्धजातिः' इति ग्रन्थस्था प्राचीना टिप्पणी ॥२८७॥

मीनो जलमपहायाऽऽरोहति तरलं सकण्टकं वृक्षम्।
तदपि न धर्मधराणां भवत्यधर्मोन्मुखं मनः क्वापि ॥२८८॥

मीनस्य जलत्यागपूर्वकं सकण्टकवृक्षारोहणरूपमसंभवं कदाचिद् भवेत् किन्तु धार्मिकाणां मनः अधर्माय उन्मुखं कदापि न भवेत् ॥२८८॥

सन्नोभपुलकमसुरं शंखं क्रामति हरौ जनैरूचे ।
मीनो जलमपहायाऽऽरोहति तरलं सकण्टकं वृक्षम् ॥२८९॥

क्षोभ (विह्वलता) जन्यरोमाञ्चयुक्तं शंखाऽसुरम् हरौ आक्रामति आरोहति सति । शंखस्य क्षोभाद् यः कम्पः तेन [ तरलम् ( चंचलम् ) ], यश्च रोमाञ्चः, तेन सकण्टकम् । शंखासुरः जले निहत इति 'जलमपहाय', उपर्याक्रमणेन आरोहतीति ॥२८९॥

गच्छति मदने जेतुं बिल्वाग्रमधिष्ठितं मुनिं कमपि । मीनो जल० ॥२९०॥

विल्ववृक्षस्याग्रे अधिष्ठाय तपस्यन्तं मुनिं कामदेवो जेतुं (तत्र विघ्नं कृत्वा तपस्यातो निवर्तितुं) गच्छति स्म । तत्र कविः कथयति कामदेवस्य ध्वजे स्थितो मीनः सकण्टकं बिल्व-वृक्षमारोहतीति ॥२९०॥

त्वयि सति, मयि दत्तायां चैद्याय किमद्भुतं ब्रुवे कृष्ण ! । मीनो० ॥२९१॥

कृष्णं विहाय चैद्याय ( शिशुपालाय ) रुक्मिणीसमर्पणं जलं त्यक्त्वा कण्टकवृक्षा-ऽऽरोहणमिदं मीनस्य ॥२९१॥

कादम्बरीविघूर्णितनयनः कोऽप्येष तूर्णमभिधत्ते । मीनो० ॥२९२

मद्यविघूर्णितनयनस्य प्रमत्तस्येदमसंभवं वक्तव्यमितिपूर्तिः ॥२९२॥

कुम्भोद्भवेन मुनिना गमितेऽञ्जलिमम्बुधौ भृशं पातुम् । मीनो० ॥२९३॥

अगस्त्यमुनिः तपःकर्कशः सकण्टकः । पातुम् अम्बुधौ अञ्जलिं गमिते (प्रापिते) सति, इत्यन्वयः ॥२९३॥

संत्यज्य कृष्णचरणौ भजते यद्यन्यदैवतं चित्तम् । मीनो० ॥२९४॥
हरिलीलारसमुज्झति धावति विषयोन्मुखं यदा चित्तम् । मीनो० ॥२९५॥

दयालुर्भगवान् प्राणिनां जीवनः । तम् अपहाय अन्यद् दैवतं [ यत्र हि स्वल्पेऽपि अन्यथाचारे कृते अनिष्टशङ्का ] भजते तदा पूर्तिः ॥२९४-२९५॥

जित्वा वरुणं, कामे गच्छति बिल्वाऽग्रगं मुनिं जेतुम् । मीनो० ॥२९६॥

जलाध्यक्षो वरुणः, तम् अपहाय कण्टकिवृक्षस्थिते गमनम् ॥२९६॥

**तटतरुशयान् विहङ्गान् मोचयितुं सुरधुनौ यान्त्याम् । मीनो० ॥२९७॥**

उद्धारार्थं यदा श्रीगङ्गा तटस्थितकण्टकवृक्षारूढान् पक्षिणः प्रति याति ॥२९७॥

**चित्रमदृष्टाऽश्रुतमिदमदर्शि मे निद्रया किमपि । मीनो० ॥२९८॥**

निद्रया स्वप्ने-अदृष्टम् अश्रुतपूर्वमिदं दर्शितं यत् मीनस्य कण्टकवृक्षारोहः ॥२९८॥

**श्रीमाधवेन्द्रसंभवगुणगङ्गां गदति विल्वगे गोपे । मीनो० ॥२९९॥**

विल्ववृक्षे स्थित्वा गोपः श्रीमाधवेन्द्रस्य गुणरूपां गङ्गां गायति, तदा नगरविहारिणी कीर्तिरिति हृदि कृत्वा मीनो जलं त्यजति कण्टकं चारोहतीत्यादि ॥२९९॥

**कोटिब्रह्माण्डसंस्थापनकरकमलाकान्तकेलीनिदानं**
**वेदोद्यद्धर्मवेश्मव्यतिकरणकलाकोविदाः संमता ये ।**
**क्षीराऽकूपारपारप्रसृमरविलसत्कीर्तिवल्लीवितान-**
**स्तम्भाऽऽरम्भापदम्भा जयधरणिपते भान्ति ते यज्ञयूपाः ॥३००॥**

कोटिसंख्यकानां ब्रह्माण्डानां स्थापनकरो यः लक्ष्मीपतिः तस्य क्रीडायाः कारणभूताः । वेदात् उत्पद्यमानं यद् धर्मरूपं भवनं तस्य व्यतिकरण( निर्माण )कलायां ये कोविदा निपुणाः । क्षीरस्य अकूपारस्य (समुद्रस्य) पारे प्रसृमरा ( प्रसरन्ती ) विलसन्ती च या कीर्तिरूपा वल्ली तस्या विस्तारार्थं स्तम्भानाम् अवष्टम्भदण्डानाम् आरम्भाय स्थापनाय अपदम्भा निष्कपटाधारभूताः । हे जयधरणिपते ! ते यज्ञस्तम्भाः भान्ति । ते यज्ञस्तम्भा विष्णोः क्रीडाकारणम्, धर्मभवननिर्माणनिपुणाः,कीर्तिवल्लीविस्तारस्तम्भाधाराः सन्तीति सर्वस्याशयः ॥३००॥

**आयास्यति प्रियतमेति निवार्य वेणुध्वानं पुरावृततनुर्यमुनानिकुञ्जे ।**
**तत्र प्रयातवृषभानुसुतामुखाब्जमाकुञ्चिताक्षि परिचुम्बति कृष्णचन्द्रः ॥३०१॥**

'प्रिया श्रीराधा आयास्यति' इति क्रीडार्थं वेणुध्वनिं त्यक्त्वा कुञ्जे गोपितनिजतनुः श्रीकृष्णः अतिष्ठत् । तत्र आयातायाः श्रीराधायाः आकुञ्चितनयनं मुखकमलम् आकुञ्चितनयनं यथा स्यात्तथा श्रीकृष्णः परिचुम्बति ॥३०१॥

रोमाञ्चप्रकरेण पूर्णवपुषौ पीयूषपाथोनिधि-
प्रोदञ्चन्मनसौ स्वसंनिधिलसच्चित्राऽनुकारक्षमौ ।
एकस्मिन् शयने परस्परतया संवीक्षणं कामिनौ
कुर्वाणौ ललितं निमेषकलनान्निन्दां विधेश्चक्रतुः ॥३०२॥

एकस्मिन् शयनीये शयानौ परस्परं विलोकयन्तौ, प्रेमातिशयात् मिथोदर्शने विघ्नभूतं निमेषं निन्दन्तौ, निमेषनिर्माणं कुर्वतो विधातुर्निन्दां चक्रतुः 'किमिति विधात्रा चक्षुषोरुपरि पक्ष्मणी ('पलक') निर्मिते' इति । पीयूषसमुद्रस्य मध्ये प्रतरत् मनः ययोस्तौ । स्वस्य संनिधौ लसतः चित्रस्य (चित्रलिखितस्य द्वितीयस्य) अनुकरणे समर्थौ । कस्यचिन्मते—"दम्पतिभ्यां नायकयुगलस्य अन्यत् चित्रं समुखे स्थापित" । तस्य युगलस्यैव इमौ अनुकरणं कुरुतः । अतएव चित्रदर्शनोद्दीप्तकामौ रोमाञ्चितावभूताम् । ललितं संवीक्षणं कुर्वाणौ, निमेषनिर्माणात् विधेर्निन्दां चक्रतुः इत्यन्वयः ॥३०२॥

दयितभुजयुगान्तरस्थिताया मृदुदयिताभुजवल्लरीवृतस्य ।
क्षणमपि हृदयाद्यदि स्मरस्य क्षरति शरस्तृणयेत्सुरस्त्रियः कः ॥३०३

प्रियतमभुजयुगलमध्यभागे (वक्षसि) स्थितायाः (नायिकायाः), दयितायाः भुजलतिकया वृतस्य (नायकस्य) च हृदयाद् यदि कामबाणः दूरीभवति तर्हि देवाङ्गना अपि को जनः तृणवत् तिरस्कुर्यात् ? कामबाणस्यैव सोयं प्रभावो यन्मानवः एवमवस्थायां देवाङ्गनामपि तृणीकरोति, न किञ्चिन्मनुते ॥३०३॥

तोयप्रक्षेपलीलामिह पयसि समातन्वतोरावयोश्चेन्
मध्ये त्वाहं जयेयं झटिति निधुवनं तत्त्वया मे विधेयम् ।
एवं कृत्वा प्रविष्टौ महति सरसि तौ, तत्र सैवाऽभिभूता
व्यामे कान्तो गृहीत्वा व्यथितकुचयुगस्तत्र चक्रे विलासम् ॥३०४॥

'आवयोश्चेत् त्वामहं जयेयं तर्हि अस्मिन् सरस्येव मया सुरतं कार्यम्' एवं कृत्वा प्रविष्टौ । सैव च अभिभूता । ततः व्यामे भुजयुगमध्ये तां गृहीत्वा, आलिङ्गनेन निष्पीडितकुचयुगलः तया सह सुरतविहारं चक्रे । "व्यामो बाह्वोः सकरयोस्तततयोर्महदन्तरम्" इति कोषः ॥३०४॥

विहारे प्रारब्धे नलजलपरिक्षेपणतया
पराभूतिं याता युवतिरथ कान्तेन हसती ।
पणे प्राप्ते देयं सुरतमिति वाचा भुजयुगे
गृहीत्वा तां धन्यो विहरति यथेच्छं सरसि सः ॥३०५॥

नल( 'पिचकारी' )द्वारा जलप्रक्षेपणात् कान्तेन हसती (हसन्ती) युवती पराभवं याता । वाचा 'देयं सुरतम्' इति वाचः अनुसारम् । सः सरसि विहरति ॥३०५॥

चकोरैरुत्कण्ठाकलितहृदयैः पीतमखिलं
निशायां पीयूषं भवति तत एव क्षतरुचिः ।
अयं प्रातःकाले रजनिदयितो, वासरपतौ
वृथैव द्रष्टव्यं कथयति जनो लाञ्छनमिदम् ॥३०६॥

उत्कण्ठायुक्तहृदयैः चकोरैः रात्रौ अखिलमपि पीयूषं पीतं भवति । ततः प्रातःकाले रजनिदयितः ( चन्द्रः ) क्षतरुचिः ( क्षता नष्टा रुचिः कान्तिर्यस्य–नष्टदीप्तिः ) भवति । वासरपतौ सूर्ये द्रष्टव्यं लाञ्छनं वृथैव कथयति जनः । पीतपीयूषः स्वत एव चन्द्रः प्रातर्निष्प्रभो भवति । सूर्य–प्रभावाद् हीनकान्तिश्चन्द्रो भवतीति सोयं कलङ्कः सूर्ये वृथा, इति भावः ॥३०६॥

कृताः सर्वे कोकाः समुपगतशोकाः, कमलिनी–
वनं निद्रां नीतं, सुरतसुखमीतं मृगदृशाम् ।
गणं जातं यातं पुनरतुलघातं स्मरशरै–
र्विधुः प्राविर्भावे सखि कुशलमावेदयते किम् ॥३०७॥

सर्वे चक्रवाकाः गतशोकाः कृताः । निद्रां नीतं, मुद्रितमित्यर्थः । मृगदृशां रमणीनां सुरतसुखम् ईतं गतम्, "ईङ् गतौ" क्तः । यूनां समूहः कामशरैः अतुलं वेदनामुपयातः [ प्राचीनपुस्तकेन न स्पष्टीभूतोर्थः ] अयं चन्द्रः स्वस्य उदयकाले किं कुशलं सूचयति ? एवंविधं क्लेशकरं कृत्वा किं कुशलमिति विरहिण्याः स्यादुक्तिः ॥३०७॥

कान्तं विलोक्य सहसोपगतं मृगाक्षी किञ्चिद्विचार्य चतुरेति चकार चेष्टाम् ।
नेत्रे निमील्य चिकुरप्रकरैर्ललाटपट्टं वृतं प्रकटिते च धुते कराब्जे ॥३०८॥

'कदा समागमो भावी' ति संकेताय समुपगतं कान्तं चेष्टितेन सूचयामास। नेत्रनिमीलनेन—सर्वेषां शयनोत्तरम्, चिकुरैर्ललाटावरणेन—चन्द्रे अस्तं गते, करकमलधूननेन- नाधुना स्थित्यवसरः, गम्यताम्, अयमेव संकेतः स्यादित्यनुमीयते ॥३०८॥

जयति चन्द्रमसौ दिवसेश्वरः शशधरस्तपनस्य किमाचरेत् ?
अपितु तत्परमप्रियपङ्कजप्रकरमेव करोति कदर्थितम् ॥३०९॥

सूर्यो दिवसस्य ईश्वरः, दिने तस्यैव प्राबल्यम्, अतएव सूर्यस्तं जयति। अयं सूर्यस्य किं कुर्यात् ? सूर्यस्य परमं प्रियं पङ्कजप्रकरं (समूहम्) एव कदर्थितं तिरस्कृतं मुकुलितं करोतीत्यर्थः, प्रत्यनीकम् ॥३०९॥

संकेतितलतिकागृहविराजमानाऽपि सदृशकान्तित्वात्।
दयितेन परिभ्रमता न वीक्षिता तालिकां ददौ हसती ॥३१०॥

सदृशीषु लतासु लतासवर्णा नायिका न अदृश्यत नायकेन, अतएव कौतुकाद् हसन्ती तालिकां ददौ ॥३१०॥

बकोट तरुकोटरं कमपि संश्रितोऽस्मिन्वने
सुखेन कुरुतान्मतिं मदितरो न कश्चित्खगः।
चलत्सुरसरोजदृक्चरणकिङ्किणीमञ्जुल-
ध्वनौ किमिह गर्वितो भवसि राजहंसव्रजे ॥३११॥

बकोट ! तुच्छबक ! तरुकोटरस्थितः त्वं 'मदितरः कश्चित् पक्षी नास्ति' इति मतिं सुखपूर्वकं कुरु। कुरुतात् इति 'तातङ्'प्रयोगेण शून्ये स्थितस्त्वं सदा एवं कुर्याः, इत्यहमाशिषो ददामीति क्रोधो व्यज्यते। किन्तु त्वं चलन्ती या सुरसरोजदृक् (देवाङ्गना) तस्याश्चरणगता या किङ्किणी क्षुद्रघण्टिका ('घूँघरु') तद्वत् मञ्जुलशब्दे राजहंसानां व्रजे समूहे गर्वितः किं भवति ? शून्यस्थाने ते गर्वः कामं भवतु, किन्तु मञ्जुलध्वनौ हंससमूहे ते गर्वः केवलमुपहासायैवेत्याशयः ॥३११॥

देव त्वद्यशसा सितं क्षितिभृतं वीक्ष्य क्वचित्पर्यटन्
कैलासो रजतस्य वा गिरिरयं केनाऽत्र संस्थापितः।
ज्ञात्वेत्थं नृप तत्र याति पुनरप्यायाति यातीत्यहो
सर्वज्ञोऽपि महेश्वरः शिशुकवद् भूयः परिभ्राम्यति ॥३१२॥

अयं मे कैलासः, अन्यो वा रजतस्य कश्चिद् गिरिरिति भ्रमेण याति, पुनः परिवृत्य आयाति, पुनश्च तत्रैव याति, इति सर्वज्ञोपि महेश्वरः शिशुकवद् परिभ्राम्यति । कीर्तेरतिशयः, तेन च गङ्गो महिमा द्योत्यते ॥३१२॥

कलङ्की शीतांशुर्विषमतुरगः केवलमपि
प्रचण्डो, मन्दाद्वात्किल सुरपतिः स्वर्गवसतिः ।
अतस्तुल्याभावान्नरपरिवृढ ! त्वं त्वमिव तद्
वदामश्चेत्सत्यं जगति जयतादेकविजयी ॥ ३१३ ॥

शीतांशुः कलङ्कयुक्तः, विषमतुरगः ( सप्ताश्वः, सूर्यः ) केवलं प्रचण्डः उग्रः, गुणाविजितः सुरपतिः इन्द्रः मन्दाद्वात् ( लज्जावशात् ) उपरि स्वर्गे निवासी जातः । अतः हे माधवेन्द्र ! त्वं त्वमिव असि । ततश्च एकमात्रो विजयी त्वं सर्वान् जयतात् , 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जे' त्यमरः ॥३१३॥

अयि तव वदनं सरोजतुल्यं कथमहमज्ञ इव ब्रवीमि कान्ते ! ।
परिहृतकमलागतो मिलिन्दः किमयमिहैव च तत्परिव्यनक्ति ॥ ३१४ ॥

अयि कान्ते ! तव वदनं कमलतुल्यमिति किम् अहम् अज्ञ इव ब्रवीमि ? अपितु न । परिहृतात् त्यक्तात् कमलात् आगतः अयं मिलिन्दः भ्रमरः किं तत् परिव्यनक्ति ? कमलं व्यक्त्वा तव मुखपरिसरे भ्रमन् भ्रमरः कमलतुल्यतां किं न सूचयति ? ॥३१४॥

तापं चापयतः सुखं कलयतो मालिन्यमुर्वीतले
तत्कालं नयतः किमन्यदसकृद् ब्रूमः सुधादीधितेः ।
देवस्य क्षणदापतेरयमहो लोकः शशाङ्केति यन्
नाम प्रस्फुटलक्ष्म मुञ्चति न तद्भूयः करोतु प्रियम् ॥ ३१५ ॥

उर्वी( पृथिवी )तलस्य सुखं कलयतः ( कुर्वतः ) तापं ( वियोगादिषु संतापं ) च आपयतः ( प्रापयतः ), अस्तमनोत्तरं तत्कालं च मलिनतां प्रापयतः सुधादीधितेः सुधाकरस्य असकृद् ( वारं वारम् ) अन्यत् किं ब्रूमः ? या रात्रिः क्षणस्य सुखस्य दात्रीति कथ्यते, तस्याः सोय स्वामी० । ततश्च एवंविधगुणस्यापि देवस्याऽस्य, प्रस्फुटं सुस्पष्टं लक्ष्म चिन्हं ( कलङ्कं ) यस्य, एवंविधं शशाङ्केति [ शशः अङ्को यस्य ] यन्नाम न मुञ्चति न त्यजति, तद्कामं भूयः अत्यधिकं प्रियं करोतु, किन्तु शशाङ्केति नाम्ना सर्वेषां कलङ्कस्य स्मरणं भवतीति भावः ॥३१५॥

चन्द्रोऽयं धवलीकरोतु धरणीं, तापं धुनीतात्करै-
रानन्दं वितनोतु दीव्यतु दिवि स्वच्छत्विषा, किं ततः ? ।
अस्य स्फूर्जदनल्पलक्ष्मघटितं दोषाकरेत्याख्यया-
साकं नाम शशीति यत्तदिह किं लोके जनैस्त्यज्यते ? ॥३१६॥

धवलीकरोतु श्वेतीकरोतु । धुनीतात् कम्पयतात् (दूरीकुरुतात्) । स्वच्छया त्विषा कान्त्या दिवि आकाशे दीव्यतु द्योततां (चमत्करोतु)। ततः किम् सम्पन्नम् ? 'दोषाणाम् आकरः' इत्यर्थस्यापि स्मारिकया (दोषायाः रात्रेः करः) इति आख्यया नाम्ना साकं सह, स्फूर्जता दीप्यमानेन अनल्पेन बहुतरेण लक्ष्मणा (अङ्केन, कलङ्केन) घटितं युक्तं 'शशी' ति यन्नाम तत्किम् अस्मिन् लोके जनैः त्यज्यते ? अपितु न। यावच्च कलङ्क-स्मारकं शशीति नाम, तावत् धरणीधवलीकरणादिभिरपि गुणैर्देवस्य को वा गुणोदयः सिध्येत् ? यतो हि पुरा रूढा प्रसिद्धिर्गुणानपि मन्दमभिवीक्षते नूनम् ॥३१६॥

हास्यं पुष्पाकरस्ते शशिमुखि सुरते ग्रीष्मकालो वियोगे
वर्षा वक्त्रे, तदग्र्यो वचसि, भृशसमुल्लासिहेमन्तकालः ।
अङ्गस्पर्शे च कान्ते तव वसति, ऋतुः शैशिरस्तज्जनो यः
संधत्ते संनिधिं ते स भवति षड्तूद्भाव्यभोगैकभर्ता ॥३१७॥

पुष्पाकरः वसन्तः, हास्यस्य श्वेतत्वात् । सुरते ग्रीष्मकालः, यतो हि ऊष्मा, स्वेदादयश्च प्रतीयन्ते । विरहे सति मुखे (अर्थात् नयनयोः) वर्षा, अश्रूद्गमात् । तदग्र्यः शरदृतुः, वचने श्वैत्यात् । हे कान्ते ! तव अङ्गस्पर्शे (आलिङ्गने) भृशसमुल्लासी अत्यन्त-सुदीप्यमानः हेमन्तकालः, तथा शैशिरः ऋतुः, वसति [ यतो हि कम्प-रोमाञ्चजाड्यादिकं जायते ] । ततश्च यो जनस्तव संनिधिं सामीप्यं संविधत्ते (स्थापयति) सः षट्सु ऋतुषु उद्भाव्याः जन्याः ये आनन्दोपभोगाः तेषाम् एकमात्रो भर्ता भोक्ता भवति । एकमात्रा त्वं सर्वेषु ऋतुषु सर्वविधान् भोगान् अनुभावयसीति प्रेयस्याः प्रशंसा प्रकटीक्रियते ॥३१७॥

अहं ते साहाय्यं मदन वितनोमीति तनुतात्
प्रहारानुद्दीप्य द्विगुणमिति नादेन कथयन् ।
स्वयं प्रोद्यद्विद्युत्प्रहरणसमाकम्पनकरो
विरोधी कान्तानामयमुपगतो मेघसमयः ॥३१८॥

हेमदन ! अहं तव साहाय्यं वितनोमि, इति हेतोः द्विगुणम् उद्दीप्य [ अत्यन्तात्यन्तमुद्दीपनं कृत्वा ] शरप्रहारान् तनुतात् ( करोतु ) इति नादेन गर्जनेन कथयन् । अर्थात् मेघस्य सोयं नादो नास्ति, अपि तु मानिनी-स्त्रीणां विरोधी मेघसमयः कथयति यत्-'अहं तव सहायतायां सज्जः, अतएव अधिकाधिकाः शरप्रहाराः एतासु कार्याः' इति स्वयं अयम् ( मेघसमयः ), प्रोद्यत् प्रकर्षेण उद्दीप्यमानं यद् विद्युद्रूपं प्रहरणम् आयुधं, तस्य समाकम्पनकरः परितो भ्रामणकरः कान्तानां विरोधी अयं मेघसमयः ( प्रावृट् ) स्वयम् उपगतः प्राप्तः । अन्योऽपि यो विरोधी भवति स प्रहारकर्तारं साहाय्यघोषणया प्रोत्साह्य, स्वयं खड्गादिकं वीरविक्रमेण भ्रामयन् विरोधिनः समीपे समुपगच्छति ॥३१८॥

**हरित्कान्ति क्षोणीतलमखिलमेतन्नवतरै–**
**स्तृणैर्जातं, कूजन्त्यतिरुचि निकुञ्जेषु शिखिनः ।**
**घनस्तोमैर्व्योम प्रसृतनिबिडैर्भूरि समभू–**
**द्दिनैर्द्वित्रैः केयं जगति गतिरानायि विधिना ॥३१६॥**

अखिलमपि एतत् क्षोणी( पृथ्वी )तलं नवतरैः अत्यन्तं नवीनैः ( सद्यः समुत्पन्नैः ) तृणैः हरित्कान्ति ( हरितवर्णा कांतिः यस्य ) तादृशं जातम् । शिखिनः (मयूराः ) अतिरुचि यथा स्यात्तथा अत्युत्कण्टापूर्वकम् कुञ्जेषु शब्दायन्ते । प्रसृतैः सर्वतो व्याप्तैश्च, तथा निबिडैः घनीभूतैः (गाढतमैः) घनस्तोमैः मेघसमूहैः व्योम आकाशं व्याप्तमभूत् । अहो ! द्वित्रैरेव दिनैः विधिना ( विधात्रा ) जगति का इयं गतिः अवस्था आनायि आनीता । अतित्वरितम् उद्दीपनविभावैर्जगतः परिस्थितिरेव परिवृत्तिं यातेति प्रावृषः प्राबल्यं प्रकटीक्रियते ॥३१६॥

**विषं मेघस्तोमस्त्यजति, कुसुमेषुर्वितनुते**
**प्रहारं कादम्बैर्नयनसुभगैरेव कुसुमैः ।**
**मयूरेष्वाविष्टः कथयति समुद्वेगवचनं**
**न जाने क्व प्राप्ताः सरसिजदृशां मानविषयः ॥३२०॥**

मेघसमूहः विषमिव विषं जलं त्यजति वर्षति, अत एव मेघवितानतले सर्वेऽपि तत्प्रभावाऽऽविष्टाः यथेच्छं घूर्णन्ते । कुसुमेषुः पुष्पधन्वा ( कामः ) नयनयोः सुभगतया प्रतीयमानैः एव कादम्बैः कदम्बवृक्षसंजातैः कुसुमैः कामिषु प्रहारं वितनुते । मयूरेषु मन्ये कुसुमेषुः आविष्टः, अत एव समुद्दीप्तस्य उद्वेगस्य वचनं कति । किंवा मयूरेषु

आविष्टः आवेशं प्राप्तः कामः कामिनः उद्वेगवचनं कथयति लापयति [ कथयतेः प्रेरणार्थ—को णिच् ] कामिनः उद्विग्नवचनानि स्वयं न ब्रुवते, अपितु मयूरेषु आविष्टः स्मरः एतानि वचनानि वक्तुं प्रेरयति वक्तुं परवशान् करोति, इति मेघ-मयूरोद्दीपनप्राबल्यमुखेन शृङ्गारातिशयो ध्वन्यते । एवमवस्थायां स्त्रीणां मानविधयः क गताः ? मानकरणस्य संप्रति स्थानं नास्तीत्याशयः । 'गतिं कां गच्छेयुर्विरहविधुराः पङ्कजदृशः' इति पाठे तु मृगदृशामुद्दीपनजन्यविह्वलतामाशङ्क्य उद्दीपनविभाववैभवातिशयेन शृङ्गारसमुज्जृम्भणं ध्वन्यते ॥३२०॥

.....

**अहं मन्ये मन्दं चलति यदयं, मन्दमथ च**
**प्रयान्त्यो मन्दत्वं दधति यदमूर्मार्गधुनयः ।**
**तदाकृष्टैर्मानैर्जलरुहमुखीभ्यो रतिपतेः**
**शरैः प्राप्तैरेव स्थितिरपि च कुत्रापि तु भवेत् ॥३२१॥**

यत् अयं मारुतः मन्दं चलति, अमूः (इमाः) मार्गस्य धुनयः नद्यः प्रयान्त्यः सत्यः यत् मन्दत्वं धारयन्ति, तत् अहं मन्ये जानामि, अनुमिनोमि यत् जलरुह( कमल ) मुखीभ्यः आकृष्टैः मानैः, मदनस्य प्राप्तैः बाणैः (अर्थात् मानिनीभ्यः परावर्तितैः) चापि कुत्र तु परिस्थितिर्भवेत् ! साम्प्रतं मान-मदनबाणादीनां साधारणी परिस्थितिरित्यर्थः ॥३२१॥

**क्षितिश्चञ्चच्चन्द्रद्युतिसदृशकाशैर्व्यतिकृता**
**तरङ्गिण्यो व्योमप्रतिमसलिलास्ताः समभवन् ।**
**स्फुरत्ताराकारैर्ललितकुमुदैश्चापि निभृताः**
**शरत्कालः प्राप्तस्तदतुलसुखस्तोमजनकः ॥३२२**

चञ्चतः (चमत्कुर्वतः) चन्द्रस्य या द्युतिः ( चन्द्रिका ) तत्सदृशैः काशपुष्पैः पृथ्वी व्यतिकृता, विमिश्रा, व्याप्ता । व्योम आकाशम् तत्प्रतिम, तद्वन्नीलसलिलाः तरङ्गिण्यः ( नद्यः ) समभवन् । तथा ताः ( तरङ्गिण्यः ) स्फुरन्त्यः याः ताराः नक्षत्राणि तद्वदाकारैः ललितैः कुमुदैः कैरवैः ( चन्द्रेण विकासनीयैः ) चापि निभृताः व्याप्ताः । तत् अतुलसुख-स्तोमस्य ( समूहस्य ) जनकः शरत्कालः प्राप्तः ॥३२२॥

**घनच्छेदोच्छूनच्छविशशधरोद्भूतपरम-**
**श्रिया राजन्त्येते कुमुदनिकरास्तेन, कलये ।**

सरोजानां नाशान्निजपतिरिपूणामुपगतैः
सुखैः, किं वा धात्रा तदपहृतसारैर्विरचिताः ॥३२३॥

घनानां छेदेन अभावेन उच्छूना पुष्टा उपचिता छविः शोभा यस्य, ईदृशो यः शशधरश्चन्द्रः तस्माद् उद्भूतया उत्पन्नया परमया शोभया एते कुमुदसमूहा राजन्ते। तेन अहं कलये अनुमिनोमि यत् निजस्य पतिः चन्द्रः, तस्य रिपूणां विरुद्धानाम् सरोजानां कमलानां नाशात् [ यतो हि कमलानि चन्द्रं दृष्ट्वैव मुकुलितानि भवन्ति ] ततश्च कमलानां पराभवात् प्राप्तैः सुखैः ( वैरिणां पराजये सति मानसप्रमोदेन शरीरोपचयो भवति इति निसर्गः )। किंवा तेभ्यः कमलेभ्यः अपहृतैः आच्छिन्नैः परागादिसारैः इमे (कुमुदनिकराः) विधात्रा निर्मिताः। कमलानां नाशे सति कुमुदानि उपचीयन्ते, अत एव कमलानां सारै-रिमानि विरचितानीति तत्रोपपत्तिः। 'तदुपहृतसारैः' इति पाठे तु-कमलैर्निजपराभवाऽवसरे स्वकीयः सारः विजेतृभ्यः कुमुदेभ्यः स्वयमुपहृतः [ 'उपदा', 'बलि' रूपेण समर्पितः ] तद्-द्वारैव धात्रा त इमे निर्मिताः, इत्यर्थः स्यात् ॥३२३॥

स्फुरत्कान्तिश्चन्द्रः कुमुदततिरुत्तानितदला
कला हंसश्रेणी, विशदरुचयो भान्ति यदमूः।
तदेतज्जानीमः प्रसृतमिदमत्यर्थममलं
यशोवृन्दं गीतं कविभिरिह लोकेऽस्ति शरदः ॥३२४॥

स्फुरन्ती सर्वतः प्रसरन्ती कान्तिर्यस्य ईदृशः चन्द्रः उत्तानितानि ऊर्ध्वमुखतया विकसितानि दलानि यस्याः, ईदृशी कैरवपंक्तिः। कला मनोहरा। संसारे यत इमाः, विशदाः मेघाद्यभिभवाऽभावात् स्वच्छाः चन्द्ररुचयः भान्ति तत् अत्यर्थं निर्मलं कविभि-र्गीतं शरदः इदं यशोवृन्दम् [ कीर्तिपटलम् ] इह लोके प्रसृतं सर्वतो व्याप्तम् अस्ति, तदेतत् जानीमः। प्रथमं तु शरदेव श्वेता। ततस्तस्याः कीर्तिस्ततोऽपि श्वेततरा, अत एव श्वैत्यघटा सेयं परितो विच्छुरितेत्याशयः ॥३२४॥

सखि वयमखिलाः सरोजमुख्यो ललिततरा अपि तस्य तत्र याताः।
तदपि कृततृपः स राधिकार्थे समुपगताष्टकलः शशीव जातः ॥३२५॥

वयं सर्वा अपि सरोजमुख्यः [ सुन्दर्यः ], राधिकाऽपेक्षया ललिततरा अतितरामा-कर्षणशालिन्यः, स्वयं तस्य ( कृष्णस्य ) सविधे वयं 'तत्र' तस्यान्तिकदेशे याताः। किन्तु राधिकार्थे ( राधिकाविरहे ) कृततृपः कृतस्पृहः 'इच्छाकांक्षा स्पृहेहा तृड्' इत्यमरः।

समुपगताः अष्ट कला यस्य ईदृशः, अर्थात् अष्टाभिः कलाभिर्युक्तश्चन्द्रो यथा अर्द्ध-शरीरो दुर्बलः संजायते, तथा सोयं जात इति विरहातिशयो व्यज्यते। 'कृततृपः' इति 'तृपा' शब्देन, राधिकां विना तस्य शोपो न निवर्तिष्यते इति साकूतं सूच्यते। 'शशि' पदेन-पूर्णकलत्वेऽपि, परितः कान्तिविस्तारकत्वेऽपि, 'शश'संबन्धजन्या कलङ्कख्यातिः स्मरणमुपगच्छत्येव जनस्येति वक्तुः सेर्ष्यत्वमभिव्यज्यते ॥३२५॥

**असि मधुकरमन्द काननेस्मिन् क्वचिदुपलभ्य मरन्दलेशमेकम्।**
**किमलघुमिव मानमातनोषि, स्मृतसहकारतरुर्न लज्जसे त्वम्? ॥३२६॥**

हे मन्द मधुकर! अस्मिन् कानने 'क्वचित्' कस्मिंश्चिद् दुर्लभे स्थाने, क्वचित् कस्मिंश्चित् अवसरे, कस्मिंश्चित् अप्रसिद्धे पुष्पे लेशमात्रम्, एकविधं मकरन्दस्य लवमात्रं प्राप्य अस्मिन् कानने 'असि'। तव सत्ता अत्र उपलभ्यते [ यदि लवोऽप्ययं न अमिलिष्यत्तर्हि तव अत्र वने स्थितिरेव नाऽभविष्यत् ]। एतावन्मात्रस्य, अतिदुर्लभस्य, कदाचिदुपलभ्यस्य कृते अस्मिन् शून्यकानने वर्तमानोऽसि। न केवलं वर्तमान एवासि, अपितु अत्र वर्तमान एव त्वम् अलघुं महान्तं मानम् ( अभिमानम् ) आतनोषि। न करोषि, अपितु आ-समन्तात् तनोषि विस्तारयसि। तव अभिमानस्य कथा दूरे दूरे विदिता। किंतु-एवं किम् आतनोषि? अभिमानस्य का कथा। स्मृतः सहकारस्य आम्रस्य तरुः येन, ईदृशस्त्वं किं कदाचित् न लज्जसे? यः सहकारवृक्षस्त्वयि सुगन्धं, मकरन्दं, स्नेहबन्धं च सुदृढमाबबन्ध, तस्य स्मृतिमात्रमपि न करोषि? दूरे स्नेहस्य कथा। किञ्च यदि स्मरणं कृत्वा साधारणी सुजनतापि न त्वया प्रकटीकृता, तर्हि एतज्जन्या लज्जा तु त्वयि संभावनीया आसीत्, किंतु सहकारस्य गुणान् स्मृत्वा, तदुपकारभारमाननाऽभावे लज्जापि तव नास्ति, हन्त का तव सुजनता वर्णनीया? आम्रादिपदस्थाने 'सहकार' पदविन्यासेन आम्रेण त्वयि गन्ध-मरन्दादयः केवलं प्रमोदसामग्री एव न वितीर्णा, अपितु 'सह-कार' पदस्वारस्यस्मारणेन सर्वदा सहकार्यकर्तृत्वं-सहस्थायित्वं-साह्यदानं च सूच्यते। एवंविधं सुदृढसौहृदं, नानारूपेण कृतोपकारमपि तं विस्मृतवानसीति लज्जव ते समुचिता। सापि ते नास्तीति किं वा वदामि ॥३२६॥

**प्राप्य क्वापि पुराणपङ्कजवने लेशं परागस्य किं**
**मानोद्भावनमागतोऽसि मनसि त्वं निन्द्य पुष्पन्धय!**
**आलस्यादसकृत् तदाम्रमधुनः पानं लसन्मञ्जरी–**
**पुञ्जे तद्वसनं तदब्जहसनं स्मृत्वा न तेऽस्ति त्रपा ॥३२७॥**

हे पुष्पन्धय ( भ्रमर ! ) कुत्राऽपि पुराणे पङ्कजानां वने परागस्य लेशमात्रं प्राप्य मनसि अभिमानोद्भूतिम् किम् आगतोऽसि ? आलस्यवशात् तत्रैव स्थितेन त्वया यत् असकृत् पुनः पुनः आम्रसंबन्धि मधुनः पानं कृतम्, लसन्तीनां शोभमानानां मञ्जरीणां समूहे यद् वसनं ( निवासः ), तस्मिन् स्थाने स्थित्वा तद् अब्जानां कमलानां हसनं विकासं दृष्ट्वा तव त्रपा लज्जा नाऽस्ति ? पुरातनानुपकारान् स्मृत्वा ते लज्जा साम्प्रतमुचिता, किंतु सापि ते नास्तीति धन्यं ते सौजन्यं ? ॥३२७॥

**अहो मे पाण्डित्यं सफलमिदमद्यैव समभू–**
**न्न ते काव्यालापाः किमपि परितापार्थमभवन् ।**
**यतः साक्षात्कुर्वे कमपि पुरुषं सन्तमुपदी–**
**क्रियां यस्मिन्सर्वाः सकलनिजविद्वत्कविकलाः ॥३२८॥**

अहो मम पाण्डित्यम् अद्यैव कृतार्थमभूत् । मम अद्यावधि संघटिताः ते काव्यबन्धाः मे परितापाय न अभवन् । यतः किल सन्तं ( सज्जनं ) कमपि ( अनिर्वचनीयगुणगौरवम् ) पुरुषं साक्षात्कुर्वे मम संमुखस्थं पश्यामि । यस्मिन् ( पुरुषे ) सकला अपि निजस्य विद्वत्त्वस्य कवित्वस्य च कलाः ( नैपुण्यविशेषान् ) उपदीक्रियाम् उपहाररूपेण समर्पयेयम् । "उपायनमुपग्राह्यमुपहारस्तथोपदा ।" इत्यमरः । यदि उपायनोचितो महापुरुषः नालप्स्यत, तर्हि मे पाण्डित्यं विफलमभविष्यत् । मम काव्यबन्धाश्च अनुतापाय अभविष्यन्नित्यर्थः ॥३२८॥

**शाणः शीतांशुरेषः स्मरशरकषणाऽकाण्डतीक्ष्णत्वहेतो–**
**स्तस्माद्भूमौ पतन्तः स्फुटकिरणगणा लोहचूर्णं तदेतत् ।**
**सिन्धोर्हालाहलाम्भः किमपि यदलिपद् वाडवज्वालमाला–**
**मध्ये यत्तापयामास च तदुदयतः शोणिमानं बिभर्ति ॥३२९॥**

स्मरशराणां कषणेन ( घर्षणेन ) अकाण्डे एव ( सहसैव ) तीक्ष्णत्वोत्पादनाय एष शीतांशुः ( चन्द्रः ) शाणः कषः ( घर्षणचक्रम् ) । घर्षणं कृत्वा कामबाणानां तीक्ष्णत्वं क्रियते । घर्षणचक्रं च सोयं चन्द्रमाः । 'शाणस्तु निकषः कषः' इत्यमरः । तस्मात् ( शाणाद् ) भूमौ पतन्तः स्फुटाः स्पष्टा अमी किरणसमूहाः लोहस्य एतत् चूर्णम् । शाणे लौहपदार्थस्य कषणसमये यथा घर्षणजन्यं लौहचूर्णं पतति तथा शीतांशुरूपाद् घर्षणचक्रात् किरणरूपेण लौहचूर्णं पततीत्याशयः । सिन्धोः ( समुद्रस्य ) सकाशात् हालाहलस्य

( विपक्ष्य ) अम्भः यत् अलिपत् लिम्पतिस्म, बाडवाग्नेर्ज्वालामध्ये च यत् तापयामास तत् ( तापितं तीक्ष्णीकृतं स्मरशरवृन्दम् ) उदयतः उदयात् [उदयस्य समये] शोणिमानं रक्तत्वं विधत्ते ( करोति )। बाडवाग्निज्वालातः उत्थापितं शरवृन्दम् आरम्भिकम् अरुणं प्रकाशं परितो विस्तारयतीत्यर्थः। कामबाणानां चन्द्ररूपे शाणे तीक्ष्णत्वं, विषलेपवत् उन्मादकरत्वं च ध्वन्यते ॥३२९॥

तरुणि ! भवनात्स्नातुं याता यदा सरसीं तदा
तव मुखमिदं मोदैर्युक्तं मया समदृश्यत ।
किमिदमधुना मुद्रामुक्तं मितेतरसंमदं
समजनि समं हृत्वा सारं स्थिताऽसि सरोरुहाम् ॥३३०

स्नानाय यदा सरोवरं याता तदा ततः प्रत्यागमनसमये तव मुखम् आनन्दैरतितरां युक्तम् अलक्ष्यत। तत्र कारणं कल्पयति-कमलानां समं सर्वं सारं हृत्वा त्वं स्थितासि, अत एव अधुना तव मुखम् मितात परिमितात् इतरः अपरिमितः संमदः आनन्दः यस्य, अत एव मुद्रातः मुक्तम् अमुद्रम् उन्मुक्तशोभम् समजनि। उपमानभूतानां कमलानां संपूर्णसार हृत्वा त्वमागतासि, अतएव तादृक् प्रमोद-शोभायुक्तमभवदिति मया ज्ञातम् ॥३३०॥

मधुप ! विपिने वीथीर्वीथीश्चरन् मधुलोभतः
क्वचिदपि तव स्वान्तं विश्रान्तभावमुपागतम् ? ।
विरतिमधुना गच्छ द्वित्रैर्दिनैर्मधुना वनं
परिमलघनं भाव्यं गन्ता तृषा, न तु दीनता ॥३३१॥

मधुलोभात् वीथीतो वीथीं चरतः तव स्वान्तं चित्तं किं क्वचिदपि विश्रान्तं भावम् उपागतम् ? अपितु विश्रान्तिं नोपागतम्। किन्तु अधुना विरतिं विरामं गच्छ। द्वित्रैरेव दिनैः ( अतिशीघ्रमित्याशयः ) इदं वनं मधुना वसन्तेन परिमलैः [ विमर्दजन्यैः सुगन्धैः ] निविडीभूतं व्याप्तं भाव्यं ( भविष्यति ), अत एव तव तृषा तृट् ( स्पृहा ) गन्ता गमिष्यति। अनद्यतनभविष्यत् ( लुट् ) प्रयोगेण ध्वन्यते यत अद्य न चेत् इतोऽग्रे शीघ्रमेव तव इच्छापूर्तिर्भविष्यति'। किन्तु तथापि तव दीनता न गमिष्यति। यतो हि प्रतिवीथिभ्रमणं तव स्वभाव एव संपन्नः ॥३३१॥

स्फुरत्कीर्तिज्योत्स्नावलिधवलिताऽशेषभुवनो
हरन् दुःखध्वान्तं नयनकुमुदोल्लासनकरः ।
प्रतिक्ष्माभृत्कोकप्रथितपुरुशोकः परतर-
स्थितिर्भूमीपाल त्वमिह तुहिनांशुर्विजयसे ॥३३२॥

स्फुरन्ती दीप्यमाना या कीर्तिरूपा ज्योत्स्नावलिः चन्द्रिकापटलम् तया श्वेतीकृतम् अशेषं भुवनं येन सः । दुःखरूपम् अन्धकारं हरन् । प्रजानां-नयनरूपाणां कुमुदानां (कैरवाणां) प्रफुल्लताकारकः । प्रतिपन्थिनः क्ष्माभृतः (राजानः) एव कोकाः चक्रवाकाः तेषु प्रथितः प्रसारितः पुरुः पृथुः (भूयान्) शोको येन । अत एव परतरा अत्युत्कृष्टा स्थितिः स्थानं यस्य ईदृशः त्वम् । हे भूमिपाल ! त्वं तुहिनांशुः शीतांशुः चन्द्रः असि, अतएव त्वं विजयसे सर्वोत्कर्षेण वर्तसे ॥३३२॥

मृदुतरचरणाऽसि हन्त राधे व्रज शनकैर्व्यथिता भविष्यसि त्वम् ।
अयि मधुरतरस्मितो मुखेन्दुर्मम सखि नन्दसुतस्य लोकनीयः ॥३३३॥

राधा तदुत्तरमाह—अतिमधुरं स्मितं (मन्दहास्यं) यस्य ईदृशः नन्दसुतस्य मुख-चन्द्रः मया लोकनीयः । तद्विलोकनेन मम मार्गजन्यः सर्वः खेदः, सर्वाऽपि च व्यथा प्रशममेष्यति, अमृतकरस्पर्शजा नवीनता, उल्लासश्च उदेष्यति ॥३३३॥

मुखं यस्याश्चन्द्रो नयनयुगलं पद्मयुगलं
धनुर्भ्रूः पञ्चेषोरथ कुचयुगं तस्य पटहौ ।
रतिः साक्षाद् या च प्रहितसुरपंकेरुहमुखी
त्रपां सा मां दृष्ट्वा कलयति कदा वक्षसि निजे ॥३३४॥

यस्या भ्रूः पञ्चेषोः कामदेवस्य धनुः । तस्याः कुचयुगलम् अधोमुखीकृतौ पटहौ ('नगारा') । प्रहिता सुरपङ्के-रुहमुखी, विधात्रा प्रेषिता सुराङ्गना । सा मां दृष्ट्वा निजे वक्षसि त्रपां (लज्जाम्) कदा करोति, तया सह मम समागमावसरः कदा स्याद् यदा हि तां लज्जितां विलोकयेयमिति नायकस्योत्कण्ठा द्योत्यते ॥३३४॥

## ❀ महाराजो विष्णुसिंहः ❀

कलानां सर्वासां प्रभवनखनिर्मुख्यभवनं
द्युतीनामानन्दो निखिलधरणीमध्यजनुषाम् ।

विधेः कीर्तिः कीर्तेर्बहुलतरमार्मयुतिगति–
वपुष्मान् धर्मोऽयं जगति जयताद्विष्णुनृपतिः ॥३३५॥

सर्वासां ( चतुःषष्टिसंख्यानां ) शिल्पादिचातुर्याणां प्रभवनखनिः उत्पत्तेराकरः। अस्मादेव नृपात्ता जगति विस्तारं जग्मुरित्याशयः। कान्तीनां प्रधानं स्थानम्, अत्र स्थान लब्ध्वा कान्तिभिः प्राधान्यकृता शोभाऽधिकृता। निखिलानां धरणीमध्यजन्मनां लोकानाम् आनन्दः, एनं दृष्ट्वैव सर्वे प्रमुदिता भवन्तीत्याशयः। विधातुः कीर्तिः, एतस्य नरेशस्य सृष्टिकरणेन विधातुः प्रशंसा सर्वतः प्रसृता, यद्विरञ्चेः सृष्टौ एवंविधा अपि महापुरुषाः समुत्पन्ना इति। कीर्तेस्तस्याः बहुतरम् आयुः, अयं यावद्राजा तावद्विधातुः कीर्तिरनघा जीवति। मतेर्बुद्धेः गतिः, अस्य चेष्टां दृष्ट्वा बुद्धिः किं किं करोतीति तस्या गतिरनुमीयते। मूर्तिधारी साक्षाद् धर्मः। विष्णुसिंहः सवाईजयसिंहमहाराजस्य पिता [ चरित्रमस्य 'ईश्वरविलासे' विलोक्यम् ॥३३५॥

एष द्वेषिपुरप्रतापनमहादेवो दृगम्भोरुह–
प्रोल्लासद्युमणिः सुरालयमहत्संचारदेवाधिपः।
लक्ष्मीसंततधारणामधुरिपुर्दानावलीधारणा–
मातङ्गो धरणीतले विजयते श्रीविष्णुसिंहो नृपः ॥३३६॥

द्वेषिणां वैरिणां प्रतापनो ज्वालनो महादेवः (शंकरेण त्रिपुरासुरो दग्धः)। लोकानां दृष्टिरूपाणां अम्भोरुहाणां प्रोल्लासे प्रफुल्लीकरणे द्युमणिः सूर्यः। सुरालयस्य स्वर्गस्य महतः संचारस्य (स्वाच्छन्द्यस्य) कृते यथा देवाधिपः इन्द्रः, तथा सुरालयानां राज्ये स्थापितानां मन्दिराणां प्रचारविषये देवदेवः। लक्ष्म्याः कमलालयायाः संततं धारणायां वक्षसि स्थापनायां यथा मधुरिपुः विष्णुः, तथा राजलक्ष्म्याः शोभाया वा धारणायां साक्षाद्विष्णुः। दानानां मदानां अवलेः ( प्रवाहस्य ) धारणायां मातङ्गः हस्ती। यथा हस्ती सर्वदा मदराजिं धारयति तथा नानाप्रकाराणां दानानां ( वितरणानां ) धारणायां प्रचारणायां सोयं हस्ती, सर्वदा सोयं ग्राम-तुला-भूमिदानादीनि करोतीत्याशयः। अत एव विजयते सर्वोत्कर्षेण वर्तते ॥३३६॥

धृतबहुलतरद्युतिर्वितन्वन् द्विजनिचयेषु दरिद्रभावमुद्राम्।
अनभिमतबलप्रकर्तनेन्द्रो जयति जगद्वलयेऽत्र विष्णुसिंहः ॥३३७॥

ता बहुलतरा द्युतिः ( गजतेजः ) येन सः । द्विजनिचयेषु ब्राह्मणसमूहेषु दरिद्रतायाः कृते मुद्रां निमीलन मुखमुद्रणं वितन्वन् ( कुर्वन् ) [ कस्यचिद् भवनादेः द्वारशृङ्खलादिषु यथा राजमुद्रा तस्योद्घाटनसमाप्तिं जनयति तथा विष्णुसिंहो द्विजानां दरिद्रयोपरि मुद्रां कृत्वा सर्वदार्थं दारिद्र्यं निमीलयतीत्यर्थः ] अनभिमतस्य शत्रुभूतस्य बलस्य पराक्रमस्य सैन्यस्य वा प्रकर्तने छेदने इन्द्रः श्रीविष्णुसिंहः भूमौ सर्वोत्कर्षेण वर्तते ॥३३७॥

**वियोगदुःखतिमिरप्रचारणनिवारणः ।**
**दृष्टोऽयं तव वक्त्रेन्दुः कुत्र मार्गश्रमव्यथा ॥३३८॥**

विरहजन्यस्य दुःखरूपस्याऽन्धकारस्य प्रचारनिवारकः तव वक्त्र( मुख )रूपः इन्दुः दृष्टः, इदानीं मार्गश्रमजन्या व्यथा कुत्र । चन्द्रोदये जाते यथा अन्धकारः, मार्गखेदः, ऊष्मजन्या व्यथा च स्वतः परिशाम्यति तथा सर्वमिदं त्वयि दृष्टे एव मे निवृत्तमित्यर्थः ॥३३८॥

**लोचनचकोरचन्द्रो दीपोऽयं भुवनभवनस्य ।**
**गुणमणिगणजलराशिर्विराजते विष्णुसिंहनृपः ॥३ ९॥**

लोचनरूपाणां चकोराणां कृते चन्द्रः भुवन( लोक )रूपस्य भवनस्य कृते दीपः, धैर्य-वीर्यादिगुणरूपाणां मणि( रत्न )गणानां कृते जलराशिः समुद्रः विष्णुसिंहो नृपः विराजते । मालारूपकम् ॥३३९॥

**विकसितसुमितस्मितप्रसूना स्तनलसितस्तबकद्वयीमनोज्ञा ।**
**नयनमधुकरस्य मोदहेतुर्मृगनयना लतिकेव कापि हेम्नः ॥३४०॥**

विकसितानि परिमितानि [ कुलाङ्गनात्वात् ] स्मितानि ( मन्दहास्यानि ) एव प्रसूनानि पुष्पाणि यस्याः सा । स्तनौ एव लसिता शोभिता स्तबकद्वयी ( पुष्पगुच्छद्वितयी ), तया मनोज्ञा मनोहरा । मृगनयना हेम्नः सुवर्णस्य कापि अनिर्वचनीया लतिका अतिमृदुला लता इव । अल्पार्थे मृदुलत्वार्थे कन् ॥३४०॥

**लोकः पश्यति कीदृशोऽत्र विषयांस्तद् ब्रूहि किं चाधर-**
**द्वन्द्वे सार्द्धमुपानयोपरि ततः किं स्यान्निषेधार्थकम् ।**

किं षष्ठीद्विवचोनिरूपणमथ प्राप्त्यर्थकं पञ्चल-
प्राप्यं मध्यगतं किमस्ति वदतात्पाण्डित्यमानो यदि ॥३४१॥

द्विषद्बलपराभूतिप्रभूतगरिमोद्गमः ।
पुरन्दर इव श्रीमान् विष्णुसिंहो महीपतिः ॥३४२॥

द्विषन् शत्रुर्यः बलः तन्नामकः असुरः तस्य पराभूतये पराभवाय ( पराजयाय ) प्रभूतः अतिबहुलः गरिम्णः गौरवस्य उदयो यस्य, बलासुरस्य विजयाय अतिगौरवं यस्य सर्वतः प्रसिध्यति इत्यर्थः । विष्णुसिंहस्तु द्विषतां शत्रूणां बलस्य पराक्रमस्य ( सैन्यस्य ) वा, पराभवाय प्रचुरतरगौरवशाली । अत एव विष्णुसिंहो महीपतिः पुरन्दरः ( इन्द्रः ) इवास्ति । 'बलारातिः शचीपतिः', "स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः" इति चाऽमरः ॥३४२॥

सखि ! मदनपतत्त्रिभिः सखित्वं व्रजपतिनन्दनदृग्द्वयस्य नूनम् ।
इति यदि न भवेत्तदा कथं तैः सह भवनं भजतामिदं स्वपाते ॥३४३॥

व्रजपतिनन्दन (श्रीकृष्ण)स्य दृग्द्वयस्य ( नेत्रयुगलस्य ) कामबाणैः सह मित्रत्वं निश्चितमस्ति । यद्येवं न भवेत्तर्हि इदं नयनद्वयं स्वपाते स्वस्य नयनद्वयस्य पाते अर्थात् नयनद्वारा विलोकनसमये एव तैः सह मदनबाणैः सह भवनं गृहं कथं भजताम् ? यथैव नन्दसुतस्य नेत्रद्वयं पतति तथैव कामबाणा अपि तेन सह तद्गृहं प्रविशन्ति । अत एव श्रीकृष्णनेत्रयुगलेन सह कामबाणानां मैत्री निश्चितमनुमीयते । नेत्रद्वयस्य कामोद्दीपकत्वं वशीकारकत्वं च व्यज्यते ॥३४३॥

खलवचसि मनाग्विजृम्भमाणे वितथमयं शितितागुरुत्वगर्वः ।
इति कलितमितेतरत्रपः किं विशति सदा गृह एव चन्द्रहासः ॥३४४॥

खलानां वचने प्रसृते [ प्रभावयुक्ते ] सति 'अयं मे शिततायाः तीक्ष्णतायाः गौरवस्य च [किं वा तीक्ष्णतासंबन्धिगौरवस्य] गर्वः वितथं मिथ्या कथा ।' इति विचार्य कलिता धारिता मितेतरा अपरिमिता त्रपा लज्जा येन (अतिलज्जितः सन्) किं चन्द्रहासः खड्गः सदा गृहे [ कोषे ] एव प्रविशति । दुष्टवचनानां तीक्ष्णतया लज्जित एव किमयं खड्गः कोषे सदा निजात्मानं गोपयति ? ॥३४४॥

हैमं हेमगुणस्यूतमेकीभूतं तनुत्विषा ।
यथार्थनामतां याति गाङ्गेयाङ्गि ! तवाङ्गदम् ॥३४५॥

गाङ्गेयं सुवर्णमिव अङ्गं यस्याः [ हे सुवर्णाङ्गि ! ] हेमनिर्मितं, हेमगुणैः सुवर्ण सूत्रैः ( 'कलावत्तू' इतिभाषा ) स्यूतं ग्रथितं च तव अङ्गदं ('केयूरम्') तव तनुत्विषा शरीर-कान्त्या एकीभूतं मिलितम्, अत एव यथार्थं नाम यस्य, तत्तां यथार्थनामतां याति-'अङ्गं ददाति' इति अङ्गदम्। सुवर्णवत् तव अङ्गम्, अङ्गदं चापि सुवर्णस्य, अत एव तदिदं सुवर्णवत् ते अङ्गं ददातीत्यर्थः। 'केयूरमङ्गदं तुल्ये,' 'तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्' इत्यमरः ॥३४५॥

विद्यायाः प्रथमावस्था नवोढाया इव स्त्रियः ।
तत्राऽसौन्दर्यमापन्ना परं रोचिष्यते किमु ॥३४६॥

विद्यायाः प्रथमा अवस्था आरम्भिकी परिस्थितिः नवोढायाः स्त्रिय इव भवति। तस्यां प्रथमावस्थायाम् असौन्दर्यम् अनाकर्षकताम् प्राप्ता परम् अग्रे कथं हृदयहारिणी स्यात् ? ॥३४६॥

आलेपोऽयं वपुषि विहितः कौङ्कुमैरङ्गरागैः
कृत्वा पीताम्बरपरिवृतं तत्र मां प्रापयेथाः ।
तत्संदेशैरलमलमियं याति सन्ध्या पिशङ्गी-
त्यालापेन प्रियसखि महत्कौतुकं मे बभूव ॥३४७॥

कौङ्कुमैः कुंकुम ('केसर')निर्मितैः अङ्गस्य रञ्जनकारिभिर्वर्णैः शरीरे आ समन्तात् लेपो विहितः। इदानीं पीताम्बरेण वेष्टितं मां कृत्वा, मामेव तत्र नयेथाः। संदेशदान-द्वारा समयहरणेन अलम्। यतो हि पिशङ्ग'पीत'वर्णा सन्ध्या इयं याति व्यतिगच्छति। इति प्रियतमायाः सविधे गन्तुमुत्कण्ठितस्य श्रीकृष्णस्य आलापेन मम महत् कौतूहलं बभूव, इति सखीं प्रति सख्या उक्तिः ॥३४७॥

वेणीनासाभरणकबरीनूपुरादीन् वहन्त्याः
लोलायन्त्या नयनलसितैः कान्तमालापयन्त्याः ।
तत्र ज्ञातो न खलु स गुरुर्भूरि भेदो भवत्या (:)
तस्मादेव प्रियसखि मया वीक्षिता साभ्यसूयम् ॥३४८॥

वेणीप्रभृतीन् नारीशृङ्गारान् धारयन्त्याः। कबरी शृङ्गारिता वेणी। 'कबरी केश-वेषोऽथ धम्मिल्लः संयताः कचाः।" इत्यमरः। लोलायन्त्याः चञ्चलताभावं दर्शयन्त्याः।

नयनचेष्टितैः कान्तं संलपन्त्याः । अर्थात् नयनयोश्चेष्टां कृत्वा कान्तेन सह संलापं कुर्वत्याः भवत्याः तव स गुप्तो भेदः ( रहस्यम् ) मया पूर्वं न ज्ञातोऽभवत्, अत एव हे सखि ! मया त्वं तस्मिन् समये अभ्यसूयया सहितं सेर्ष्यं यथा स्यात्तथा वीक्षिता । यदि प्रियतमेन सह सप्रेमसंभाषणवृत्तान्तः तव मया अज्ञास्यत, तर्हि असूयापुरस्सरं त्वां न अवालोकयिष्यम् । ततश्च मम सख्ये न संदेहस्त्वया कार्य इत्याशयः ॥३४८॥

चञ्चच्चित्ताऽभिलाषा निपुणतरनटी, रङ्गभूमीचरित्रं,
गोपालीमोहलीला क्षुलितजलनिधेरग्रवेलाविलासः ।
विस्फूर्जत्कोटिकामावतरपरिमिलन्माधुरीणां धुरीणा
संपत्तिः, प्रादुरास्ते भवदधरपुटीचुम्बिवंशीनिनादः ॥३४९॥

चञ्चन् सर्वतः प्रसरन् चित्ताभिलाषो य याः ईदृशी अतिनिपुणा नटी । अयं वंशीनिनादः अतिनिपुणा नटीव, यस्याश्चित्ताभिलाषः सर्वतः प्रसरति । रङ्गभूमेश्चरित्रमिव मूर्तिमत्, वंशीनिवादं श्रुत्वा 'रङ्गभूमौ का का लीला विहितेति' प्रत्यक्षमिव भवति । गोपालीनां गोपीनां मोहजनितलीलारूपः क्षुभितः ( तरङ्गसंकुलः ) यो जलनिधिः तस्य अग्रभूताया वेलायाः ( तटस्य ) विलासः शोभा । गोपीनां मोहसमुद्रमुत्तरङ्गं निरोद्धुं वंशीनादः वेलास्थानीय इत्याशयः । विस्फूर्जतां विजृम्भमाणानां कोटिसंख्याक-कामदेवानाम् अवतरणसमये या माधुर्यः मधुरताः ( मधुरिमाणः ), तासां मधुरतानां धुरीणा श्रेष्ठा संपत्तिः । वंशीनादसमये कोटि-कोटिकामानां माधुर्यलक्ष्मीरुल्लसतीति तात्पर्यम् । ईदृशः, हे श्रीकृष्ण ! भवतः अधरपुट्याः चुम्बी [ अधरपुटे निधाय भवता श्वासवायुभिः उद्भावितः ] वंशीनिनादः प्रादुरास्ते प्रादुर्भूय सर्वतः प्रसरति ॥३४९॥

नसि श्रुत्योरक्ष्णोरुरसि हृदि मध्ये चरणयो-
स्त्वदीयं सौन्दर्यं सकलमियमुद्भावितवती ।
वशीकुर्याद्यावन्न तव दयितं नन्दतनयं
नताङ्गि त्वं तावच्चरितमभिसारं विरचय ॥३५०॥

नसि नासिकायाम् [ पदन्नोमासिति नासिकाया नस् आदेशः ] कर्णयोः, अक्ष्णोः ( नेत्रयोः ), मध्ये ( कटिदेशे ) एतेषु अङ्गेषु सा ( कृष्णस्य अभिनवा प्रेयसी ), सकलमपि तव सौन्दर्यम् उद्भावितवती । तवाऽनुकरणेन तेषु तेषु पूर्वोक्तेषु अङ्गेषु तवेव सौन्दर्यं सा प्रकटितवती । ततश्च तव सौन्दर्यं सर्वं तदग्रे प्रकटीकृत्य नन्दतनयं ( श्रीकृष्णम् ) यावन्न

वशीकुर्यात् [ तव सकाशान्न अपहरेत् ] तावत्त्वम् अभिसारम् ( कृष्णं प्रति अभिसरणम् ) विरचय कुरु । इति श्रीराधिकां प्रति तां शीघ्रगमनाय प्रेरयन्त्या दूत्या उक्तिः ॥३५०॥

अविकलमुखचन्द्रस्पर्शिपूर्णाप्रदोषः
स्तनविनिहितमुक्तापुञ्जगुञ्जौघभावः ।
उदयति रसराजस्याऽयमन्येषु रोषः
कथमयमिह चक्षुःकोणयोः शोणिमा ते ॥३५१॥

अविकलं ( संपूर्णरूपेण ) मुखचन्द्रस्य स्पर्शी पूर्णायाः ( पूर्णिमायाः ) प्रदोषः [ रजनीमुखम्, सन्ध्या ] । तव चक्षुःकोणयोः शोणिमा रक्तता, (क्रोधजन्यः अरुणरागः) तथा प्रतीयते यथा पूर्णिमाचन्द्रे प्रदोषजन्योऽरुणराग इत्यर्थः । स्तनयोः विनिहिते स्थापिते मुक्तापुञ्जे ( मौक्तिकहारे ) गुञ्जौघस्य कृष्णलासमूहस्य 'चिरमी' 'चिरमिठी' पुञ्जस्य भावः स्वरूपं, सत्ता । नयनयोः शोणिमा मुक्ताहारे गुञ्जापुञ्जतां संपादयति । सोयं शोणिमा रसराजस्य शृङ्गारस्य अन्येषु जनेषु रोषः उदयति । नयनशोणिमा नास्ति मन्ये शृङ्गारस्य अन्यान् प्रति सोयं रोषोस्ति [ कविसम्प्रदाये रोषस्य रक्तो वर्णः ] । एवमुत्प्रेक्षिता ते नयनयोः शोणता कथमभूत् ? कथमकाण्डे कुपितासि ? ॥३५१॥

अस्यावलम्बविलसद्वृषभानुकन्या-
गोपेन्द्रनन्दननिरीक्षणनिर्निमेषा ।
चन्द्रावली चटुललोचनकोणशोण-
कान्त्या निवारितवती विशतीं वयस्याम् ॥३५२॥

राधा-कृष्णौ कुञ्जे मिथः प्रेमनिरीक्षणं कुर्वन्तौ चन्द्रावली सावधानं ददर्श । कुञ्जे च काचित्सखी प्रवेष्टुमैच्छत् । अतएव तामिमां चन्द्रावली निवारयामासेत्याह—अस्य श्रीकृष्णस्य गात्राऽवलम्बपूर्वकं विलसन्ती शोभमाना या वृषभानुकन्या, तथा गोपेन्द्र-नन्दनः ( श्रीकृष्णः ) च अनयोः प्रेमलीलानिरीक्षणे निमेषशून्या चन्द्रावली चटुलयोः लोचनयोः शोणया कान्त्या ( अर्थात् किञ्चित्कोपपूर्वकम् ) कुञ्जे प्रविशन्तीं वयस्यां 'अस्मिन् समये तृतीयेन न गन्तव्यम्' इति निवारयामास ॥३५२॥

करालगरलादपि प्रसभवज्रपातादपि
प्रचण्डपवनादपि ज्वलनकीलजालादपि ।

त्वदीयविरहादपि स्मरनरेन्द्रकोपादपि
त्वदक्षिपुटचर्चितो दहति पर्णवीटीरसः ॥३५३॥

नायकस्य नेत्रे ताम्बूलवीटीरसश्चर्चितस्तत्प्रियतमया दृष्टः ! सोयं रसः सपत्नीकृतनयनचुम्बनेनैवेति नायिका ब्रूते—प्रसभं ( बलात् ) वज्रस्य पतनात् अपि । ज्वलनस्य अग्नेः कीलजालात् ज्वालासमूहात् अपि । 'वह्नेर्द्वयोर्ज्वालकीलौ' इति कोषः । त्वदीयो विरहोऽपि चेदुपतिष्ठेत्तदापि तावती पीडा न भवति यादृशी पीडा सपत्नीसंगमं विदित्वेत्याशयः । तव अक्षिपुटे नेत्रोपरिभागे चर्चितः लिप्तः । दहति, इति अङ्गविशेषसंबन्धमनुक्त्वा सामान्यतः कथनेन—'सपत्नीसंबन्धः सर्वाङ्गज्वालां संपादयतीति' संसूच्यते ॥३५३॥

दैन्यं सौन्दर्यभाजां मधुरिमनगरीसीम्नि निःसीमभावो
लास्यं लावण्यलक्ष्म्याः समहिममहसामुद्गमस्याऽवकाशः ।
सौभाग्यं स्नेहवृत्तेः फलफलनकला कामनाकामवल्ल्याः
केयं कैशोरलीला सलिलकमलिनीकोरकोल्लासलक्ष्मीः ॥३५४

सुन्दर्याः कैशोरलीला [ बाल्यं समाप्य युवतिभावे पादन्यासलीला ] केयम् अर्थात् अनिर्वचनीया । सौन्दर्यभाजां [ याः सुन्दर्यः आत्मनि लावण्यगर्वं वहन्ति स्म तासाम् ] दैन्योपदेशः । माधुर्यरूपनगर्याः सीमाप्रदेशे निःसीमभावः ( वयःसन्धिकृतं माधुर्यं निःसीमं भवतीत्याशयः ) । एवमवस्थायां लावण्यशोभा प्रत्यक्षं नृत्यतीव । समहिम०—माहात्म्ययुक्तानां तेजसाम् उदयस्याऽवसरः । वयःसन्धितोऽनन्तरं सुन्दर्यां तेजःप्रादुर्भावः सहैव च किञ्चिद् गौरवभावस्योदयश्चेति भावः । स्नेहवृत्तेः सौभाग्यम् , यस्य जनस्याऽस्यां स्नेहसंबन्धः, तस्य हि पूर्णो भाग्योदयो यो हि एतादृश्यां स्नेहमाबद्धवानिति । कामनारूपायाः कामवल्ल्याः फलोत्पादनकला फलप्रसवनचातुरी । या कामना ( 'चाहत' इति हिन्दीभाषा )रूपा कामसंबन्धिनी लता आरोपिता, तथा अद्य फलं दर्शितमित्याशयः । सेयं कैशोरलीला सलिले कमलिन्याः यत् कोरकमासीत् तस्य उल्लासलक्ष्मीः विकासशोभा । कोरकभावेन स्थितस्य कमलस्य अधुना विकासः प्रारब्ध इति तात्पर्यम् । 'सलिले कमलिनी' त्युक्त्या सलिलस्थिताया एव विकास इति सद्यस्कत्वं संसूच्यते । 'लक्ष्मीः' इत्युक्त्या सोयं नवयौवनोद्गमः एका संपत् , भाग्यवतां कृते एका अपूर्वा लक्ष्मीरित्याशयः ॥३५४॥

**अङ्गानामतियौवनोन्नतिजुषां भूषामणीनामथ**
**स्वच्छन्दप्रमदप्रमोदजनुषां मन्दस्मितानामपि ।**
**कान्त ! त्वन्नखचन्द्रचञ्चिलरुचो वर्द्धिष्णुभिः कान्तिभिः**
**कस्याः कामविलाससौधशिखरे दीपोऽद्य मन्दायितः ॥३५५॥**

यौवनेन अत्युन्नतिजुषाम् अङ्गानाम्, भूषणजटितानां रत्नानाम्, स्वच्छन्दं यः प्रमदः ( प्रकृष्टो मदः, यौवनजनित उन्मादः ) तेन संजातो यः स्वाभाविको हर्षः तस्मात् जनुः उत्पत्तिर्येषाम् ईदृशानां मन्दहास्यानां चाऽपि । तथा हे कान्त ! तव चरणयोः ये नखचन्द्राः तेषां चञ्चलायाः रुचः कान्तेः सकाशात् प्रसरन्तीभिः कान्तिभिश्च कस्या भाग्यवत्याः कामविलासार्थं निर्मिते हर्म्यशिखरे अद्य दीपः मन्दीकृतः ? "रात्रौ कस्या भाग्यवत्या विलासभवने त्वं गतवान् ?" इति स्पष्टं प्रश्नमनुक्त्वा कस्या नायिकाया विलासहर्म्ये त्वया निजाङ्गानाम्, निजभूषणानाम्, यौवनोन्माद–प्रमोदजातानां मन्दस्मितानाम्, चरणनखानांकान्तिभिश्च गृहस्थितो दीपः मन्दप्रभः कृतः इति व्यङ्ग्यमुच्यते । ततश्च भङ्गयन्तरेण व्यङ्ग्यस्यैवाऽत्राभिधानमिति पर्यायोक्तालंकारः ॥३५५॥

**अये कस्याः केलीभवनशिखरेऽद्य व्यवसितः**
**प्रदीपं संपूर्णां रजनिमयमुज्जागरयिता ।**
**इदानीं वा कस्या हितमतिमतिक्रम्य भवने**
**मदीये संप्राप्तः परिमृदितपीताम्बरधरः ॥३५६॥**

पुनस्तयैव विधया–'कस्या विलासभवने रात्रिं व्यतिगमितवान्' इति सपत्न्या गेहे रात्रिनिवासेन ईर्ष्याकषायिता काचिदाह–अये कस्याः ( भाग्यवत्याः ) केलीभवनस्य शिखरे अद्य संपूर्णां रात्रिं यावत् अयं त्वम् प्रदीपम् उज्जागरयिता प्रज्वालयिता व्यवसितः संनद्धो जातः ? दीपं प्रज्वाल्य कस्या वा अङ्गसौन्दर्यं निभालयन् विलासेन रजनीं गमितवानसि ? किञ्च प्रातःकालेऽपि कस्या भवने गमनं निश्चितमासीत् । भवांश्च कस्याः ( तस्याः ) हितां मतिम् उल्लङ्घ्य मदीये गृहे प्राप्तः ? किन्तु रात्रौ त्वं तया सह निश्रब्धविलासं कृतवानिति ते सुरतसंमर्देन मृदितं पीताम्बरमेवाऽऽवेदयति, यतो हि त्वं स्पष्टं 'परिमृदितपीताम्बरधरः' । गतां रात्रिं सपत्न्या सह विलसितवान् अद्यापि अन्यस्या भवने ते गन्तव्यमनीषितमासीत् । एवमवस्थायामपि मन्दभागिन्या मद्गेहे आगतः, किन्तु 'परिमृदितपीताम्बरधरः' ? "अहो ते दाक्षिण्यम् ?" इति कयाचन साकूतोपालम्भमावेद्यते प्रियतमः ॥३५६॥

गर्वालापः कलानां विधिरचनकलाकौशलानां कलापः
साक्षात्कारः सुखानां कुसुमशरधनुर्विक्रमस्याऽवतारः ।
रूपावेशो रुचीनां सरससुरभितासंपदां सारसंघः
सिन्धुः सौन्दर्यसीम्नां समुदयति वपुःसंनिवेशो मृगाक्ष्याः ॥३५७॥

मृगाक्ष्याः वपुःसंनिवेशः ( अङ्गसंघटनम् ) कलानां शिल्पचातुर्याणां परस्परं गर्वपूर्वकमालापः । प्रत्येकाङ्गस्य निर्माणकला आत्मानं सर्वोत्कृष्टां कथयति, तेन च सर्वाङ्गसुन्दरता सूच्यते । विधातुः निर्माणे यानि यद्विधानि च कलानां कौशलानि, तेषामेकत्र दर्शनार्थं निवेशः । कामदेवस्य धनुषो विक्रमदर्शनस्य अवतारः । एवंविधं शरीरसंनिवेशमालम्ब्यैव कामदेवस्य धनुर्निजपराक्रमं दर्शयतीत्याशयः । रुचीनां नानाविधानामिच्छानां रूपं प्रति आवेशः । सर्वविधरुचिशालिनोऽपि ईदृशे वपुःसंनिवेशे आविष्टा इव रूपं प्रति आकृष्टा भवन्तीति तात्पर्यम् । सरसाः सुरभिताश्च (सुगन्धिताश्च) याः संपदः तासामेकत्र संघटितः सार—समूहः । सौन्दर्यपराकाष्ठानां समुद्रः, इतोऽधिकं कीदृगपि सौन्दर्यं न भवितुमर्हतीति परीक्ष्यतामेकत्र ॥३५७॥

एते दिवाकरनिशाकरभार्गवाद्याः
प्रोद्यन्तु हृद्यवपुषः शतशोऽन्तरिक्षे ।
गम्भीरघोषरुचिरं मुदिरं विहाय
दत्ते मयूरमनसि प्रमुदं न कश्चित् ॥३५८॥

आकाशे सूर्यचन्द्रभार्गव( शुक्र )प्रभृतयः हृद्यवपुषः दर्शनीयशरीराः शतशः एव काम प्रोद्यन्तु ( उदयन्ताम् ) किन्तु गंभीरेण घोषेण रुचिरं सुन्दरं मुदिरं ( मेघं ) विहाय मयूरस्य मनसि कश्चिदपि प्रकृष्टां मुदं ( प्रीतिम् ) न दत्ते, मेघस्य गम्भीरघोषं श्रुत्वैव मयूरस्य मनः प्रमाद्यतीति वक्तुस्तात्पर्यम् ॥३५८॥

स्फाराकारास्तारास्तारापतिसंमुखाः समुद्यन्तु ।
केन भवेत्सुखधारा विनाऽत्र धाराधरं शिखिनः ॥३५९॥

तारापतेः चन्द्रस्य संमुखस्थाः स्फाराकाराः बहुविधाऽऽकाराः ताराः कामं समुद्यन्तु उदयन्ताम् किन्तु धाराधरं मेघं विना शिखिनः मयूरस्य सुखधारा अविच्छिन्नः सुखप्रवाहः केन भवेत् ? केनापि न भवेत् । चन्द्रः, नानाकारास्ताराश्च गगने उदयन्ते किन्तु मयूरस्य सुखप्रवाहो मेघेनैवेत्याशयः ॥३५९॥

रेरे खद्योत विद्योतितदहनकणद्योत सद्यो विसर्पन्
विद्योतेथास्तमिस्रानिशि, न च भवता स्थीयतां वासरेऽपि ।
अस्मिन्नुच्चण्डरोचिर्निचयविरचितध्वान्तधाराधरान्तो
रात्रीकान्तोपशान्तोद्धुरकिरणरुचिर्द्योतते‍ऽसौ दिनेशः ॥३५६॥

विद्योतितः प्रकाशितः दहनकणस्य अग्निस्फुलिङ्गस्य द्योतः प्रकाशो येन, त्वया अग्निकणस्येव प्रकाशः प्रकटीकृतः, अतएव शीघ्रं शीघ्रं प्रसर्पन् सन् [ न तु स्थिरतया, तथा सति कौतुकं न स्यात् ] तमिस्रानिशि अन्धकाररात्र्यां विद्योतेथाः, शुक्लपक्षरात्र्यां न तावानवसरः । ततश्च रात्रिवत् वासरेऽपि भवता न स्थीयताम् । यतो हि अस्मिन् ( वासरे ) उच्चण्डेन प्रचण्डेन रोचिर्निचयेन प्रभासमूहेन विरचितः ध्वान्त( अन्धकार) रूपस्य धाराधरस्य ( मेघस्य ) अन्तो येन । रात्रिकान्तस्य ( निशापतेः चन्द्रस्य ) उपशान्ते उपशमने उद्धुरा संनद्धा किरणानां रुचिः प्रकाशो यस्य, ईदृशः असौ दिनेशः दिनकरः सूर्यः विद्योतते । अयं सूर्यः प्रकाशते येन न केवलं अन्धकारस्यैवान्तः कृतः अपि तु चन्द्रसदृशस्यापि किरणकान्तिरुपशमिता । ततश्च त्वत्सदृशस्य कणमात्र-प्रकाशस्य का वा गणनेत्याशयः ॥३५६॥

पाटीरद्रुमसंगिनः सुरभितासंपद्धृता मारुताः
सौरभ्यैरिह बर्बुरे परमपाकुर्वन्तु दुर्गन्धताम् ।
किं त्वेतस्य मदोत्पतन्मधुकरीपक्षच्छिदः संतपत्-
सूचीतीक्ष्णकठोरकण्टकगणाः केनाऽपनेया भुवि ॥३६०॥

पाटीरद्रुमाणां चन्दनवृक्षाणां सङ्गिनः सहचराः, सौरभ्यसंपदा पूर्णाः मारुताः ( पवनाः ) बर्बुरे 'बंबूले' इति भाषाप्रसिद्धे वृक्षे, सौरभ्यैः निजसौगन्धैः तस्य दुर्गन्धतां [ दुर्गन्धयुक्तताम् ] अपाकुर्वन्तु दूरे कुर्वन्तु । किन्तु एतस्य बबुलवृक्षस्य मदेन उत्पतन्तीनाम् उड्डीयमानानां भ्रमरीणां पक्षच्छेदकाः संतपत्( संतप्यमान ) सूची( लोह-कणिटका 'सूई' )वत् तीक्ष्णाः ( निशिताः ) कठोरा निष्ठुराश्च कण्टकसमूहाः केन अप-नेयाः अस्यां भुवि केन दूरीकरणीयाः ? न कोप्येतत्पृथक्कर्तुं समर्थः । सत्सङ्गेन आधेय-गुणाऽऽधानेपि स्वाभाविको दुर्गुणो न केनापि निवारयितुं शक्यः, इत्यन्योक्तिः ॥३६०॥

यथा तव कलावृद्धिस्तथा नक्षत्रसंक्षयः ।
नक्षत्राधिप नैषा ते स्वनामोच्चाटनोचिता ॥३६१॥

चन्द्रं प्रत्यन्योक्तिः—हे नक्षत्राधिप ( नक्षत्राणां पालनकर्तः, चन्द्र ! ) यथा यथा तव कलानां वृद्धिर्भवति तथा तथा नक्षत्राणां तारकाणां संक्षयः [ तव प्रकाशेन तेषां विलोपः ] । एषा स्वनाम्नः स्वीयानां नाम्नः स्वकीयजनानां चिह्नस्यापि उच्चाटना उद्वासना निवर्तना नोचिता । स्वस्योन्नतौ स्वीयानां वृद्धिरेव कर्तव्या, न तु तेषामुच्चाटना, इति स्वार्थिनं कञ्चिदधिकारिणं प्रति व्यङ्ग्यमर्यादया प्रोच्यते ॥३६१॥

शरत्कालस्य माहात्म्याद् बभूव हरिणीदृशाम् ।
भवद्विरहजव्याधिशतचन्द्रं नभस्तलम् ॥३६२॥

विरहे एकोऽपि चन्द्रः संतापाय भवति वियोगिनाम् । किन्तु अस्मिन् शरत्काले हरिणीदृशां ( सुन्दरीणाम् ) विरहजनितेन व्याधिना एकचन्द्रयुक्तमपि नभस्तलं शतचन्द्रयुक्तमिव बभूव । दुःसहस्ते विरहजो व्याधिरित्याशयः ॥३६२॥

नृप त्वद्यन्त्रनिर्यद्भिर्लोहितैर्लोहगोलकैः ।
अराजततरामुद्यच्छतचन्द्रं नभस्तलम् ॥३६३॥

तव 'तोभ'नामकाद् यन्त्रात् निःसरद्भिः वह्नितापाद् लौहितैः रक्तवर्णैः लोहगोलकैः, नभस्तलं उद्यद्भिः शतसंख्याकैः चन्द्रैर्युक्तमिव अराजततराम् । आकाशे रक्ताः दीप्तियुक्ताश्च गोलकाः चन्द्राः इव प्रतीयन्ते स्म, इत्याशयः ॥३६३॥

रामावताराऽवतरन्नारदाद्यङ्गरोचिषा ।
व्याप्यमानमतो रेजे शतचन्द्रं नभस्तलम् ॥३६४॥

श्रीरामस्य अवतारसमये तदनुगमाय अवतरतां नारदादिदेव–मुनीनानामङ्गकान्त्या व्याप्यमानम् ( व्याप्तम् ) अभूत्, अतएव शतचन्द्रयुक्तमिव रेजे शुशुभे । नारदादेः चन्द्रसाम्यं माघादिभिरप्युक्तम् ॥३६४॥

अतुलद्युतिभिर्देवसुन्दरीवदनोद्गतैः ।
अशोभिष्ट यशोभिस्ते शतचन्द्रं नभस्तलम् ॥३६५॥

देवसुन्दरीणां वदनेभ्यो निःसृतैः [ देवाङ्गनाभिर्गीतैरित्याशयः ] अतएव अनुपमकान्तिशालिभिः तव यशोभिः शतचन्द्रयुक्तमिव अशोभिष्ट । तव यशश्चन्द्रवत् शुभ्रम्, असाधारणद्युतिधारकं चास्ति । तच्च न केवलं भूमौ जनैरेव, अपितु दिवि देवैरपि गीयते इति राजस्तुतिर्व्यङ्ग्या ॥३६५॥

प्रोद्यत्कर्पूरपूरप्रकरपरिलसत्पाण्डिमानं हसद्भि-
स्त्वत्कीर्तीनां समूहैर्जयति जगदिदं निस्तमस्कं समस्तम् ।
किंच न्यञ्चच्चकोरीचटुलतरचलच्चञ्चुपूर्णप्रसर्प-
त्पीयूषाभिः प्रभाभिर्दिनमकृत शरच्चन्द्रचान्द्रीमयत्वम् ॥३६६॥

इति श्रीमत्तैलङ्गान्वयमङ्गलमहोदधिराकासुधाकर–नानानरेन्द्र–
मणिमुकुटकिर्मीरितपादारविन्द–देवर्षिश्रीकृष्णभट्ट–
कविकलानिधिगुम्फिता–

# पद्यमुक्तावली–समाप्ता

प्रोद्यन् प्रसर्पन् यः कर्पूरपूरस्य कर्पूरपटलस्य प्रकरः राशिः (महान् यः कर्पूरराशिरित्या-शयः ) तस्य कर्पूरराशेः पाण्डिमानं श्वेततां हसद्भिः । कर्पूरराशितोऽप्यधिकशुभ्रैः त्वत्कीर्ति-समूहैः । न एकदेशे एव, अपितु समस्तमिदं जगत् निस्तमस्कं तमो( अन्धकार )रहितं जातम्, अत एव जयति, सर्वोत्कर्षेण वर्तते । किञ्च–न्यञ्चन्तीनां कीर्तिप्रभापानार्थं नीची भवन्तीनां चकोरीणां चटुलतरं ( अतिचञ्चलं ) यथा स्यात्तथा चलन्तीभ्यः चञ्चुभ्यः पूर्णतया प्रसर्पत् ( निपत्य परितः प्रसरत् ) पीयूषम् ( अमृतम् ) यासाम्, एतादृशीभिः-कीर्तिप्रभाभिः । दिनं, शरत्कालस्य यश्चन्द्रः, तस्य या चान्द्री [ चन्द्रस्येयम्, चन्द्रिका ] तन्मयत्वम् तत्पूर्णम् अकृत अकार्षीत् [ कृञः आत्मनेपदे लुङ् ] । त्वत्कीर्तिसमूहैः सर्वदा दिनं चन्द्रिकासुशोभितमिव अलक्ष्यत, इत्याशयः ॥ ३६६ ॥

एतावत्येव सेयं बत समधिगता पद्यमुक्तावली द्राक्
प्रारम्भे चाऽवसानेऽपि च परिरहिता पत्रकैः कैश्चिदत्र ।
शब्दार्थानां चकासच्चिररुचिरचमत्कारपूर्णा तु सेयं
संमोदायैव सिध्येज्जयनगरगतैः प्राच्यवृत्तैरनर्घा ॥१॥

विषयविभागविमुक्ता मुक्ता च कथाप्रसङ्गेन ।
युक्ता मुक्तावलिरियमामुक्तकपद्यमुक्ताभिः ॥२॥

यत्पद्मबन्धादिकचित्रकाव्या-
न्यत्र प्रदिष्टानि यतस्ततोऽपि ।

नोद्धार एषामिह सूचितस्तद्
ग्रन्थान्तरेभ्यस्तदिदं प्रसाध्यम् ॥३॥

सहसैव मुद्रितेयं सहैव टीकाऽपि सृज्यमानासीत् ।
तद् यादृक्तादृगिदं विद्वद्वृन्दे निवेदितं विनयात् ॥४॥

मुक्तावलीमनर्घां पुराणपत्रेषु निह्नुतां सुचिरात् ।
सेयं 'गुणगुम्फनिका' प्रकाममापादयेत्प्रकाशगताम् ॥५॥

जयपुरनरेन्द्रपूजितसुकविकलानिधिकुलप्रसूतेन ।
देवर्ष्युपाह्वभट्टश्रीमथुरानाथशास्त्रिणा कलिता ॥६॥

भुवनगगनजननयनप्रमिते ( २०१४ सं० ) विक्रममहीपतेर्वर्षे ।
'गुणगुम्फनिका' मुक्तावलिटीका पूर्तिमुपनीता ॥७॥

श्रीमद्गौतम-वर्यवंशविलसद्देवर्षिचूडामणि-
श्रीकृष्णाभिधसूरिसत्कविकलानिध्यन्ववायोद्भवः ।
काव्य-व्याकरणानुषङ्गिबहुलप्रौढप्रबन्धादिकृत्
टीकां निर्मितवानिमां लघुतमां श्रीमञ्जुनाथाभिधः ॥८॥

इतिश्रीजयपुरमहाराजाधिराजसंमानित-तैलङ्गकुलजलधिकौस्तुभायमान-
कविकलानिधिश्रीकृष्णभट्टान्ववायसंभूत-मञ्जुनाथोपनामक-
कविशिरोमणि-साहित्यवारिधि-
देवर्षिभट्टश्रीमथुरानाथशास्त्रिसाहित्याचार्यनिर्मिता
पद्यमुक्तावलिटीका
'गुणगुम्फनिका' समाप्तिमगात् ।

——*:*——

# पद्यानामनुक्रमणिका

| | | श्लोकसंख्या | पृष्ठसंख्या |
|---|---|---|---|
| १७१. | नसि श्रुत्योरक्ष्णोरुरसि | ३५० | १२५ |
| १७२. | नानाज्ञानाविधाना ( कामधेनुबन्ध: ) | २६४ | ६४ |
| १७३. | नास्ति यः स तु | २२२ | ७८ |
| १७४. | निकुञ्जनवलीलनं | ३७ | १३ |
| १७५. | निगमगिरमतीत्य | ८१ | २५ |
| १७६. | निजनिजपतिप्रेमा, | २४६ | ८७ |
| १७७. | नित्यज्यारूढ चापा, | २४७ | ८८ |
| १७८. | निमग्नतां हरेः पादतरौ | २१६ | ७६ |
| १७९. | नृप त्वद्यन्त्रनिर्य | ३६३ | १३१ |
| १८०. | न्यक्कृत्य क्वापि | १३६ | ४५ |
| १८१. | पञ्चचामरवृत्तेऽत्र याः | २०३ | ६८ |
| १८२. | परमभीषणभूरि | ६५ | २० |
| १८३. | पाटीरद्रुमसंगिनः | ३६० | १३० |
| १८४. | पाटीरवाटीमवगाह्य | २५३ | ६० |
| १८५. | पायादुद्दण्ड | १८० | ६१ |
| १८६. | पार्श्वोद्यद्भीमपुत्री | १२५ | ४१ |
| १८७. | प्रकृतिरमरभाषा | १५३ | ५२ |
| १८८. | प्रणमत निरवद्यनित्यलीलं | २३७ | ८४ |
| १८९. | प्रणमामि विश्वसारां | ४३ | १५ |
| १९०. | प्रमोदभरदायकं | ३५ | १३ |
| १९१. | प्रागुधर्मस्तम्भमूलः | ११३ | ३७ |
| १९२. | प्राचीनैः प्रोच्चलद्भिः | १३८ | ४३ |
| १९३. | पश्चाल्लग्नपरागपुञ्ज | २१ | ८ |
| १९४. | प्रागवाताधोरणा | १३९ | ४३ |
| १९५. | प्राप्य क्वापि–पुराण | ३२७ | ११७ |
| १९६. | प्रोदञ्चत्प्रावृषेण्य | १२९ | ४३ |
| १९७. | प्रोद्यत्कर्पूरपूर | ३६६ | १३२ |
| १९८. | प्रोद्यत्पीताम्बर | १२६ | ४१ |
| १९९. | बकोट तरुकोटरं | ३११ | १११ |

——*——

# राजस्थान पुरातन ग्रन्थमाला के कुछ ग्रन्थ

## प्रकाशित ग्रन्थ

**संस्कृतभाषाग्रन्थ**—१. प्रमाणमञ्जरी—तार्किकचूड़ामणि सर्वदेवाचार्य, मूल्य ६·०० । २. यन्त्रराजरचना-महाराजा सवाई जयसिंह मूल्य १·७५ । ३. महर्षिकुलवैभवम्-स्व० श्रीमधुसूदन ओझा मूल्य १०·७५ । ४. तर्कसंग्रह-पं० क्षमाकल्याण मूल्य ३·०० । ५. कारकसम्बन्धोद्योत-पं० रभसनन्दि मूल्य १·७५ । वृत्तिदीपिका पं० मौनिकृष्ण मूल्य २·०० । ७. शब्दरत्नप्रदीप मूल्य २·०० । ८. कृष्णगीति- कवि सोमनाथ मूल्य १·७५ । ६ शृङ्गारहारावलि-हर्षकवि मूल्य २.७५ । १०. चक्रपाणिविजयमहाकाव्यम्-पं० लक्ष्मीधरभट्ट मूल्य ३·५० । ११. राजविनोद-कवि उदयराज मूल्य २·२५ । १२. नृत्तसंग्रह मूल्य १·७५ । १३. नृत्यरत्नकोश, प्रथम भाग-महाराणा कुंभा मूल्य ३·७५ । १४. उक्तिरत्नाकर-पं साधुसुन्दर गणि मूल्य ४.७५ । १५. दुर्गापुष्पांजलि-पं० दुर्गाप्रसाद द्विवेदी मूल्य ४·२५ । १६. कर्ण कुतूहलं तथा कृष्णलीलामृतं-भोलानाथ मूल्य १·५० । १७. ईश्वरविलास महाकाव्य, श्रीकृष्ण भट्ट, मूल्य ११.५० । १८. पद्यमुक्तावली-कवि कलानिधि श्रीकृष्णभट्ट मूल्य ४.०० । १९. रसदीर्घिका-विद्याराम भट्ट मूल्य २·०० ।

**राजस्थानी और हिन्दीभाषा ग्रन्थ**--१. कान्हडदे प्रबन्ध-कवि पद्मनाभ मूल्य १२·२५ । २. क्यामखांरासा-कवि जान मूल्य ४·७५ । ३. लावारासा-गोपालदान मूल्य ३·७५ । ४. वांकीदासरी ख्यात-महाकवि वांकीदास मूल्य ५·५० । ५. राजस्थानी साहित्यसंग्रह भाग १, मूल्य २·२५ । ६. जुगल-विलास-कवि पीथल मूल्य १·७५ । ७. कवीन्द्रकल्पलता-कवीन्द्राचार्य मूल्य २·०० ।

## प्रेसों में छप रहे ग्रन्थ

**संस्कृत भाषा ग्रन्थ**—१. त्रिपुराभारतीलघुस्तव-लघुपंडित । २ शकुनप्रदीप-लावण्यशर्मा । ३. करुणामृतप्रपा-ठक्कुर सोमेश्वर । ४. बालशिक्षा व्याकरण-ठक्कुर संग्रामसिंह । ५. पदार्थरत्नमञ्जूषा, पं० कृष्णमिश्र । ६. काव्यप्रकाशसंकेत-भट्ट सोमेश्वर । ७. वसन्तविलास फागु । ८. नृत्यरत्नकोश भाग २ । ९. नन्दोपाख्यान । १०. रत्नकोश । ११. चान्द्रव्याकरण । १२. स्वयंभूछंद-स्वयंभू कवि । १३. प्राकृतानंद-कवि रघुनाथ । १४. मुग्धाववोध आदि औक्तिक संग्रह । १५. कविकौस्तुभ-पं० रघुनाथ मनोहर । १६. दशकण्ठवधम्-पं० दुर्गाप्रसाद ।

**राजस्थानी और हिन्दीभाषा ग्रन्थ**—१. मुंहता नेणसीरी ख्यात-मुंहता नेणसी । २. गोराबादल पद्मिणी चऊपई--कवि हेमरतन । ५. चन्द्रवंशावली-कवि मोतीराम । ६. राजस्थानी दूहा संग्रह । ७. वीरवांण-ढाढी बादर ।

इन ग्रन्थों के अतिरिक्त अनेकानेक संस्कृत, प्राकृत, अपभ्रंश, प्राचीन राजस्थानी और हिन्दी भाषा में रचे गये ग्रन्थों का संशोधन और सम्पादन किया जा रहा है ।

